कर्नाटकसारस्वतोपासकाः
परिचयग्रन्थमाला ५

# हानगल् श्रीविरूपाक्षशास्त्री

डा. हित्लळ्ळि सूर्यनारायण नागेन्द्रभट्टः





# डा. हित्तलळ्ळि सूर्यनारायणनागेन्द्रभट्टः

डा. हित्तलळ्ळि सूर्यनारायणनागेन्द्रभट्टमहाभागः १९५४ तमे वर्षे हित्तलळ्ळिग्रामे श्रीनागेन्द्रभट्टदम्पत्योः लब्ध जन्मा आबाल्यं गुरुकुलपद्धत्या संस्कृतं, शास्त्राणि च अभ्यस्य मैसूरुनगरे श्रीमन्महाराजसंस्कृतपाठशालायां महामहोपाध्यायानां ई.एस्. वरदाचार्याणां सन्निधौ मीमांसाशास्त्रमधीतवान् । ततश्च तिरुपतिस्थ राष्ट्रियसंस्कृतविद्यापीठे समधिगतविद्यावारिधिपदवीकः, केरळेषु अध्यापनवृत्तिं समारभत । ततश्च पाण्डिचेर्यां फ्रेन्च् इण्डालोजि–शोधसंस्थाने संशोधकत्वेन कार्यमकरोत् । तदनन्तरं मैसूरुनगरे वेदान्तभारती–संशोधनमन्दिरस्य निर्देशकत्वं स्वीकृत्य अनेन विदुषा नैके ग्रन्थाः प्रकाशिताः । वेदान्ते, मीमांसायां, साहित्ये च कृतभूरिपरिश्रमेण अनेन श्रीलौगाक्षिभास्कर–विरचितोऽर्थसंग्रहः कन्नडभाषया अनूद्य प्रकाशितः। अद्यत्वे स्वर्णवल्लीब्रह्मविद्या–संस्थानस्य निर्देशकपदे विराजते अयं महोदयः। विंशत्यधिकग्रन्थाः महोदयेन संशोध्य अनूद्य च प्रकाशिताः ।

कर्नाटकसारस्वतोपासकाः
परिचयग्रन्थमाला

# हानगल् श्रीविरूपाक्षशास्त्री

(श्रीविद्याभिनववालुकेश्वरभारतीस्वामिनः)

डा. हित्लळ्ळि सूर्यनारायण नागेन्द्रभट्टः

कर्नाटकसंस्कृतविश्वविद्यालयः
पम्पमहाकविमार्गः, चामराजपेटे
बेङ्गळूरुः–५६००१८

HANAGALLU VIRUPAKSHA SHASTRY

Author:

Dr. Hitlahalli Suryanarayana Nagendra Bhat
No. 38/39, Ramachandrapuram, Vidyaranyapura Post,
Bangalore - 560017

Published by

Prasaranga
Karnataka Samskrita University
Pampa Mahakavi Road, Chamarajpet
Bangalore - 560018
Ph.: 080 - 2670 1303, 26705387



Copies can be had from:

Samskrita Bharati
'Aksharam', 8th Cross, 2nd Stage,
Girinagar, Bangalore - 560085.
Phone: 080 - 26722576 / 26721052

First Impression: 2013

Paper used: 70GSM NS book print

Copies: 1000

Page: vi + 66 = 72

Price: Rs. 50/-

ಸ್ವಾನ್ ಪ್ರಿಂಟರ್ಸ್
www.svanprinters.com
☎ 080-26742233

# कुलपतिवचनम्

जानन्त्येव हि तत्रभवन्तो भवन्तः प्राग् वर्षत्रयात् लब्धजन्मनः कर्नाटकसंस्कृतविश्वविद्यालयस्य प्रधानतमम् उद्देश्यद्वयं वेदवेदान्तादिशास्त्रेषु उन्नताध्ययनव्यवस्थापनं,शोधकार्यञ्चेति । विशिष्य एतद्द्वारा शास्त्रवाङ्मयस्य तत्त्वं समाजे व्यापयितुं विशेषोपन्यास-ग्रन्थप्रकाशनादियोजनाभिः प्रयासः विहितः ।

संस्कृतभाषा, तत्साहित्यं, शास्त्रसम्पत् च अगाधशेवधिः । खननेन अधिकं वर्धते । एतस्य निधेः सम्यगवगमनं यथा प्रधानं, तथा तस्य सम्यगुपयोगः अपि प्रधानतामाप्नोति इति वयं जानीमः । कर्नाटकसंस्कृतविश्वविद्यालयः शासनाङ्गं, शैक्षणिकाङ्गं, प्रसाराङ्गम् च इति अङ्गत्रयं भजते । शासनाङ्गे कन्नडं, संस्कृतं आङ्ग्लं चेति तिसृणामपि भाषाणां परिक्रमः प्रचलति । शैक्षणिकाङ्गे क्वचित् कन्नडस्य, अधिकं संस्कृतस्योपयोगः भवेत् । प्रसाराङ्गे तु कन्नडसंस्कृतेः शास्त्रसम्पन्नतार्थं संस्कृतस्य प्रधानग्रन्थानां कन्नडानुवादः आवश्यकः। एवं अपूर्वग्रन्थानां आङ्ग्लभाषयामपि अनुवादः, संस्कृते स्वतन्त्रग्रन्थप्रकटणं च अस्माकं अग्रिमलक्ष्यं भवेत् ।

विश्वविद्यालयः प्राचीन-आधुनिकज्ञानयोः युक्तसंयोजने दत्तावधानः। प्राधान्येन एतत् शैक्षणिकाङ्गे भवेत् । केवलं परीक्षाप्रचालनं शैक्षणिकाङ्गस्य लक्ष्यं न । तदर्थं योग्यं पाठ्यं पूरकपाठ्यरचना, परामर्शनग्रन्थनिर्माणम् अपि प्रधानं भवति । एतदर्थं इदानीं प्रसाराङ्गः आरब्धः ।

कर्नाटकराज्यं बहु प्राचीनकाले अनल्पान् संस्कृतग्रन्थान् असृजत्। मध्यकालीनसन्दर्भेऽपि तत् समेधितं च । आधुनिककाले तु तस्य

नूतनरीत्या अभिवर्धनस्यावश्यकता वर्तते । कर्नाटकराज्यं अभिलषितार्थचिन्तामणिः, शिवतत्वरत्नाकरः इति बृहद्विश्वकोशद्वयं प्रायच्छत्। शतशः शास्त्रकाराः, व्याख्यानकाराश्चाभवन् अस्मिन् राज्ये। अनेके शास्त्रग्रन्थाः निर्मिताः। शताधिकाः व्याख्यानकाराः संस्कृते अन्यादृशव्याख्यानानि व्यरचयन् ।

कर्णाटकराज्यस्य सुदीर्घे वाङ्मयेतिहासे अतिविशिष्टेन योगदानेन नक्षत्रायमानाः अनेके महान्तः विद्यन्ते । इदं संस्कृतसाहित्येतिवृत्तं स्वातन्त्र्यपूर्वकालीनयुगस्य संस्कृतसाहित्येतिहासं समीचीनतया चित्रयति। किन्तु स्वातन्त्र्यसङ्ग्रामस्य कालघट्टे प्रवृत्तस्य संस्कृतसाहित्यसर्जनस्य इतिवृत्तरचना सम्यक् न जाता । कालक्रमेण इदम् अन्धकारयुगमिव सम्पद्येत कदाचित् । अस्मात् कारणात् १८५० तः १९५० पर्यन्तम् एकस्य शताब्दस्य कालखण्डे कर्नाटकस्य विविधेषु प्रदेशेषु निवसतां संस्कृतवाङ्मयस्य महत्तां वर्धयितुं कारणीभूतानां महतां योगदानविषये, तेषां जीवनगाथाविषये च शतं पुस्तकानि प्रकाशनीयानि इति अस्माकम् आशयः । अनया योजनया संस्कृतवाङ्मयस्य नवेतिहासः निर्मितः भविष्यति। एतेन, आधुनिकयुगेन सह गतशताब्दस्य सांस्कृतिकबन्धोऽपि दृढो भविष्यति इति मे विश्वासः।

अस्यां ग्रन्थमालायां डा. हित्तलळ्ळि सूर्यनारायणनागेन्द्रभट्टमहोदयेन विदुषां हानगल् विरूपाक्षशास्त्रिमहोदयानां संस्कृतयोगदानमधिकृत्य विरचितं पुस्तकमिदं प्राकाश्यं नीयते। विद्वद्वरेण्यः कविः डा. हित्तलळ्ळि सूर्यनारायणनागेन्द्रभट्टमहोदयः निरन्तरं संस्कृतशास्त्रसेवायां रतः नैकप्रबन्धकर्ता शोधकर्मणि रतः अस्माकं प्रार्थनानुरोधेन ग्रन्थ-पुष्पिकामिमां अल्पे काले विरचय्य प्रदत्तवानिति तस्मै महाभागाय कार्तज्ञ्यं निवेदयामः ।

**प्रो. मल्लेपुरं जि. वेङ्कटेशः**, डि.लिट्
कुलपतिः

# हानगल् श्रीविरूपाक्षशास्त्री

श्रीगुरुः शरणम्

सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।।

सर्वत्र प्रसिद्धोपदेशः श्लोकोऽयं प्रायेण प्रातःस्मरणीयानां यति-वरेण्यानां समेषामनामग्राहं वन्दनेनानन्दयति। अस्मिन् अन्तर्भवन्ति हि सन्तोऽनन्तपुण्य नामानोऽसमसमयसमेया येषु सन्ति दासीभूतदेवतया श्रिया सेवनीयाः श्रीमत् परमहंसेत्यादिबिरुदाङ्कित-विद्याभिनववालुकेश्वरभारतीनामधेयाः। पावनाचरणानां एतेषां हानगल्ग्रामजानां श्रीविरूपाक्षशास्त्रिवर्याणां चरितं यद्यपि नः परोक्षम्, तथापि न परोक्षं कीर्तिमात्रावशेषाणां महिषासुरपुर(Mysore)हृदयदेशे विद्योतमानाया श्रीमहाराजसंस्कृतमहाविद्याशालाया आसन्नभूविभागे विद्यमानं समाधि पदम्, यन्मादृशानां संस्कृतविद्यामधीयानाना-मेकान्तपदम्।

प्रपञ्चप्रतीतस्य महिषपुर(Mysore)प्रासादस्य प्रतीच्यवाचीकोणे वर्तमानं सरस्वतीप्रासादं प्रविविक्षूणां ज्ञानभिक्षूणां प्रथमगोचरोऽयं प्रदेशो मनसि जिज्ञासां जनयति प्रथमसूत्रमिव प्राच्या मीमांसायाः। लक्षणप्रमाणादिकथनं विना सा न शाम्यतीति सहृदयेन केनचित्तदेव कार्यम्। सुन्दरमिदं लघुमन्दिरं कस्य वा महात्मनः स्यादिति प्रश्नो यदा समुदेति, तदा वक्तारः स्यू राष्ट्रविख्यातवैदुष्याणां स्वजन्मना

हानगल्ग्रामं वसुधायां विख्यापयतां विनयेनापि विराजमानानां राजमान्यानां श्रीविरूपाक्षशास्त्रिपादानामिति।

किं भोः, किमिदमुच्यते, शास्त्रिवर्याणां समाधिः क्वापि न दृष्टपूर्वः श्रुतपूर्वो वा। यतीनां खलु विविदिषूणां विदुषां वा स भवितुमर्हति।

सत्यम्। शास्त्रिपादा इमे प्रतिज्ञाततुर्याश्रमा अपि जन्मनाम्नैव विश्रुताः। अत्र तदीयवदनारविन्दाद् श्रवणाञ्जलिपुटपेयं श्रीशाङ्करभाष्यामृतं पीतवन्तः स्वर्णवल्लीप्राक्तनश्रीचरणाः [1]श्रीसर्वज्ञेन्द्रसरस्वतीस्वामिनः प्रमाणम्। तत्रभवन्तो हि कथाप्रसङ्गे यत्याश्रमगतान् पूर्वाश्रमशास्त्रिपादान् भूयो भूयो वर्णयाम्बभूवुः। कर्णाटकलोकभाषामये पाठशालाया [2]इतिवृत्ते (१९५१) ऽपि स्वामिपादानां कृष्णश्वेतचित्रस्य परिचयो ब्र.श्री. हानगल्-विरूपाक्षशास्त्रिण इत्येव प्रदत्तः।

अत्रेदं कारणं भवेत् - अन्त्ये वयसि श्रीविरूपाक्षशास्त्रिवर्यैः संन्यासं स्वीकृत्य प्राप्तव्यं किमपि नासीत्, या पूर्वं नैव प्राप्ता। धर्ममात्रप्रवणैः श्रीविरूपाक्षशास्त्रिभिः सर्वदा संन्यासिभिरिव रागादिदोषशून्यं जीवितं पालितम्। इदं खलु संन्यासपदवाच्यम्। तदुक्तं गीतायां श्रीकृष्ण-परमात्मना (५.३) -

'ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति।'

जपपारायणादिभिः संन्यासिनां चरितं स्मारयतां शास्त्रिपादानां काषायादि लोकसङ्ग्रहार्थमेव परम्। अतो विशेषं न कञ्चन पश्यन्तः पूर्वनाम्नो विख्यातिं स्मरन्तः प्रत्यग्राह्वं प्रत्यभिज्ञातुमप्रभवो बहवो



नाम्ना पूर्वेणैव व्यवजह्रुरित्यादिकं उत्प्रेक्ष्यते। वस्तुतस्तु पूर्वनाम्ना व्यवहारो न सङ्गत इति वदन्ति।

अस्तु यतितल्लजानामपि पूर्वनाम्नैव व्यवहारः। सम्प्रति वक्तव्यं हानगल् ग्रामविषये। ग्रामोऽयं कुत्रास्ति, तत्र को विशेषोऽस्ति इत्यादि।

अस्ति किल मोहमयी(Bombay)महानगरी पश्चिमपारावारतीर विश्रान्ता भारतदेशे भूतिभूषणानां राजधानी। तत्प्रशासनभूमौ सह्यकुलाद्रेः शिरसि शिरसि(Sirsi)नामकं पत्तनमन्तर्गतं पूर्वम्। अथवा किमिति तावद्दूरं गम्यते। विद्वन्मण्डनमण्डिताया धारापुर्याः (Dharwad), वणिङ्मण्डलभूयिष्ठाया भ्रूलता(Hubli)पुर्या वा समीपे विद्यते शैवविप्राणामावासभूमिः, या कुन्तल (Karnataka)जनपदे हानगल् इति महाभारतविख्याता विराटनगरी। अत्र गूढं वसता धर्मराजेन गाढं योऽसौ वैदिको धर्मः परिरक्षितः, स बहुतिथे काले यातेऽपि अद्यापि जनतया सम्यक् परिपाल्यते।

हानगल्पत्तनं सम्प्रति कर्णाटकराज्यस्य हावेरिमण्डलेऽस्ति। सुमवल्लरी (Hubli)पुरीतः, तन्तुपुरीतो (Dharwad) वा ७५क्रोश-(कि.मी.)दूरे धर्मानदी तीरे वरदानदीसमीपे विद्यमानमिदं कस्यचिद् भूतपूर्वभूपस्य नष्टावशेषेण दुर्गेण संयुतम्। श्रीबिल्वेश्वरदेवालयसमीपे दन्तिसरो(आनेकेरे)ऽपि शोभते। गोष्ठपर्वे(हट्टिहब्बे)ति प्रतिवार्षिकः सांस्कृतिक उत्सवोऽत्र भवति। तारकेश्वरस्य शिलामयो महादेवालयोऽत्र विद्यते। गणेश-वीरभद्र-रामलिङ्गादीनां च मन्दिराणि अत्र सन्ति। कुमारस्वामिमठोऽपि वीरशैवानामत्रास्ति।

**वंशपरिचयः**

अस्मिन्प्रकृतिरमणीये हानगल्ग्रामीणपरिसरे श्रीमत्या भागीरथ्या गर्भ शुक्तिकायां देवणदीक्षितवंशीयेभ्यः [३]श्रीकृष्णदीक्षितेभ्यः श्रीशालिवाहनशके १७९५तमे हायने(१८७३) श्रीमुखसंवत्सरे पौषमासे ७ भार्गववासरे (प्रातः ४ वादने) दीक्षितश्रीः श्रीविरूपाक्षो व्यजायत।

सप्तमे वयसि (विक्रमसंवत्सरे) दशाहज्ञातयः श्रीशिवदीक्षिता बालकं श्रीविरूपाक्षं दत्तकविधानेन पुत्रं स्वीकृतवन्तः। श्रीशिवदीक्षितानां धर्मपत्न्यां श्रीमत्यां तीर्थाबायीनाम्न्यां सन्ततिर्नासीदिति तत्र कारणम्।

वैदिकधर्मश्रद्धालुभिः श्रीशिवदीक्षितैः गर्भाष्टम एव उपनयनसंस्कार संस्कृतोऽयं वटुः ब्रह्मश्रीकाशीकरशिवानन्दशास्त्रिणां[४] सकाशे कुलक्रमागतस्य कृष्णयजुर्वेदस्य अध्ययनं कृतवान्। यद्यपि तस्मिन् समये परकीयप्रशासनेन नवीनविद्याभ्यासव्यवस्था कृता, तथापि प्राचीनविद्याव्यासङ्गार्थं श्रीशिवदीक्षितैः श्रीविरूपाक्षः प्रेरितः।

ततो हानगल्ग्रामे वसतां ब्रह्मश्रीकिरणिकृष्टाचार्याणां[५] सविधे नाटकान्तसाहित्यमधीतं श्रीविरूपाक्षैः।

महाकाव्यानां चम्पूनां नाटकानां च पञ्चकत्रयस्याध्ययनं नाटकान्त साहित्यपदाभिधेयम्। एतर्हि नाटकान्तसाहित्यमिति प्रायो न ज्ञायत इति विद्वदुक्तदिशा तद्विवरणं विधीयते।

**(अ) महाकाव्यपञ्चकम्**

प्रथमं कालिदासविरचितं काव्यद्वयम् -

(१) रघुवंशमहाकाव्यम्  (२) कुमारसम्भवमहाकाव्यम्



ततो बृहत्त्रयी -

(३) भारविप्रणीतं किरातार्जुनीयमहाकाव्यम्

(४) माघकृतं शिशुपालवधमहाकाव्यम्

(५) श्रीहर्षग्रथितं नैषधमहाकाव्यम्

**(आ) चम्पूपञ्चकम्** -

(१) भोजराजविरचिता रामायणचम्पूः

(२) अनन्तभट्टप्रणीता भारतचम्पूः

(३) त्रिविक्रमपण्डितकृता नळचम्पूः

(४) वेङ्कटाध्वरिविहिता विश्वगुणादर्शचम्पूः

(५) नीलकण्ठदीक्षितग्रथिता नीलकण्ठचम्पूः

**(इ) नाटकपञ्चकम्** -

(१) कालिदासस्य अभिज्ञानशाकुन्तलम

(२) उम्बेकस्य उत्तररामचरितम्

(३) विशाखदत्तस्य मुद्राराक्षसम्

(४) भट्टनारायणस्य वेणीसंहारम्

(५) कृष्णमिश्रस्य प्रबोधचन्द्रोदयम्

एतद्व्यतिरेकेण दण्डिविरचितदशकुमारचरितं भट्टबाणप्रणीतं हर्षचरितम् कादम्बरी चेति स्वयं गद्यत्रयमधीयते स्म। आरम्भे पदच्छेदादिपूर्वकं व्याकरणविशेषादिकथनम्। अनन्तरं चिन्तनपूर्वकः कण्ठपाठः। एवं यथेच्छं अष्टादशविद्यानामिव अष्टादशकाव्यानामध्ययनमेव नाटकान्तसाहित्यम्।

श्रीविरूपाक्षशास्त्रिवर्यैरपि क्रमेण इमान्येव काव्यान्यधीतानीति वक्तुं

नास्ति प्रमाणम्। किन्तु तस्मिन् काले तत्र प्रतीतानि अन्यान्यपि काव्यानि स्वीकृतानि स्युः।

साम्प्रदायिकपाठशालायामाधुनिककालेऽपि नाटकान्तसाहित्य-मध्याप्यते। किन्तु सर्वकारीया मान्यता नास्तीति प्रायेण च्छात्रा तदध्ययनाय न यतन्ते ।

नाटकान्तसाहित्याध्ययनं ऐदम्प्राथम्येन कदा क्व किमर्थं प्रक्रान्त-मित्यपि चिन्तनीयम्। अत्र निर्दिष्टानां ग्रन्थानां रचनाकालस्य पर्यालोचने क्रमोऽयं नातिप्राचीन इति प्रतीयते। स्वर्णवल्लीमठाधीशैः श्रीसर्वज्ञेन्द्र-सरस्वतीस्वामिभिः श्रीगोकर्णगणेशशास्त्रिणां सकाशाद् नाटकान्त-साहित्यमधीतम्। हित्तलळ्ळि गोविन्दभट्टादयः श्रीचरणानां सहाध्यायिनः । एवं साहित्याभ्यासं कृतवन्तः सङ्ख्यावन्तो दृष्टाः, येषां भाषापाण्डित्यमसाधारणम्। अद्यापि साहित्यविद्याया अभिवृद्धये सोत्साहानामेतादृशः पाठ्यक्रमो भवेत्।

साहित्यविद्यामाकलय्य, ऋषिसदृशानां सोमयाजिनां ब्रह्मश्री-काशीकर सीतारामशास्त्रिणां समीपे तर्कशास्त्रस्य अध्ययनं श्रीविरूपाक्षशास्त्रिभिः आरब्धम्। तर्कविद्या खलु सर्वशास्त्रोपकारिणी।

ततः धारापुर(Dharwad)मागत्य श्रीमज्जगद्गुरुशङ्कराचार्य-पाठशालायां संस्थापकमुख्योपाध्यायानां ब्रह्मश्रीतम्मणाचार्याणां निकटे न्यायशास्त्राध्ययनं कृतम्। पाठशालायाः प्रथमाचार्या अण्णिगेरि (अग्निहोत्रि)तम्मणाचार्याः प्रायो द्वादशवर्षाणि (१८८७-९८) पाठशालायां पाठयाम्बभूवुः। एतेषां गुरवः साङ्गलिपाठशालाया मुख्योपाध्याया आस्थानविद्वांसो ब्रह्मश्रीभिक्कुशास्त्रिणः। श्रीतम्मणा-चार्याणां सकाशेऽधीतवत्सु विद्वत्सु प्रमुखाः -



**(१) उप्पिनबेटगेर्युपाह्वब्रह्मश्रीकृष्णशास्त्रिणः**

पण्डितप्रकाण्डभालचन्द्रशास्त्रिणां पितामहानां, विद्वन्मणिनागेश-शास्त्रिणां पितृपादानां प.प.श्रीकृष्णानन्दस्वामिनां पूर्वाश्रमेऽपि महा-तपस्विनां उप्पिनबेटगेरि श्रीकृष्णशास्त्रिणां चरित्रं महाराष्ट्रभगवद्भक्त-पाङ्गरकरकृतायां सन्तचरित्रमालायां अस्ति (पुटसंख्या १२६)। धारवाडसंस्कृतपाठशालायामेते २२वर्षाणि प्रधानोपाध्यायपदेऽवर्तन्त (१८९८ - १९२०)। अग्रजानां ब्रह्मश्रीगणेशशास्त्रिणां सकाशे वेद-काव्य-ज्योतिष्याध्ययनान्तरं ब्रह्मश्रीतम्मणाचार्याणां सविधे न्यायशास्त्रं अधीतवन्तः। धर्मशास्त्रे महान्तं परिश्रमं कृतवन्त इमे संस्कृत-मराठी-कन्नड भाषासु प्रवचनं कुर्वन्ति स्म। काशीसनातनधर्ममहामण्डलस्य कोलकथा (Kolkata)विद्वत्सम्मेलने दर्भाङ्गमहाराजानामाध्यक्ष्ये विद्वद्रत्नम् महोपदेशक इति बिरुदद्वयमेतेः प्राप्तम्। एतेषामेकस्मिन् दिन एव समग्रश्रीमद्भागवत पारायणशक्तिरासीत्। एतेषामधिष्ठानं धारवाडपाठशालायामेवास्ति।

**(२) (हानगल्)जन्तल्युपाह्वब्रह्मश्रीमहादेवशास्त्रिणः**

अध्ययनान्तरमेते स्वग्राम एव संस्कृतमध्यापयन्ति स्म। श्रीहित्तलळ्ळि गोविन्दभट्टाः किञ्चित्कालमेतेषां सकाशे तर्कविद्यायाः किञ्चित्प्रवेशार्थं स्थिताः।

**(३) ब्रह्मश्रीहानगल्विरूपाक्षशास्त्रिणः**

कूडलिश्रीविद्याभिनववालुकेश्वरभारतीस्वामिनः येषां जीवनवृत्तं प्रकृतपुस्तके वर्ण्यते।

## (४) दण्डवत्युपाह्वब्रह्मश्रीमहादेवदीक्षिताः

(श्रीशालिवाहनशकवर्ष १८०६ - ६७)

यजुर्वेदाध्यायिनः शिवगङ्गाश्रीचरणदत्तत्रिकाण्डमण्डनाचार्य-बिरुदाङ्किताः। श्रीमन्तो ब्रह्मश्रीतम्मणाचार्याणां ब्रह्मश्रीकृष्णशास्त्रिणां ब्रह्मश्रीहानगलविरूपाक्षशास्त्रिणां च सविधे साहित्य-वेदान्त-मीमांसा अधीतवन्तः। सोमयाजिनामेतेषां ग्रन्थेषु चतुर्वेदनित्याह्निकरत्नमाला-आपस्तम्बसंस्काररत्नमाला-हिरण्यकेशिसत्याषाढश्रौत सूत्रभाष्याणि प्रकाशितानि।

धारवाडश्रीमज्जगद्गुरुसंस्कृतपाठशालायाः(१८८७) संस्थापकाः श्रीमन्तो गुरुनाथरायमहाभागा अपि एतेषामेव शिष्याः। तत्रैव हनुमद्देवालयोऽप्येतैरेव निर्मापितः। हावनूरुग्रामे जाता(१८५४) विद्याभ्यासार्थं धारापुरं (Dharwad) आगताः सर्वाः परीक्षा उत्तीर्य वाक्कीलाः (advocate) संवृत्ताः। काशीयात्रार्थं प्रस्थितास्तत्र पाठशाला दृष्ट्वा धारानगर्यामपि शाला स्थापनीयेति निश्चितवन्तः। शृङ्गगिरिजगद्गुरुश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिनः पाठशालां श्रीशालिवाहनशके १८०९ सर्वजित्संवत्सरे श्रावणशुक्ल-पञ्चम्यां स्थापयामासुः।

श्रीविरूपाक्षशास्त्रिणां विवाहो विद्यार्थिदशायामेव, वेदाध्ययनकाले, द्वादशे वर्षे सम्पन्नः। किन्तु विवाहो विद्यानाशाय न जातः। पूर्ववद् वेदाध्ययने क्रियमाणे श्रीशिवदीक्षिताः कैलासवासिनः संवृत्ता इति गृहभार एतेषामुपर्येव पतितः। तथापि मातुरनुज्ञां प्राप्य वेदाध्ययनानन्तरं शास्त्राध्ययनं कृतवन्तः।

अण्णिगेरि(अग्निहोत्रि)तम्मणाचार्याणां सकाशादधीत्य ततो



बळ्ळारि (Bellary) मण्डलस्य हरप्पनहळ्ळिप्रदेशे श्रीविरूपाक्ष-शास्त्रिवर्याणां न्यायशास्त्राध्ययनं अनुवृत्तम्। किन्तु तत्र सम्यक् सौकर्यं नासीत्। श्वशुरः श्रीगुरुनाथरायः कल्याणपुरे (Bangalore) बभूवेति व्याकरणादिव्यासङ्गार्थं तत्र गतम्। श्रीचामराजेन्द्रसंस्कृत-विद्यालये श्रीनुग्गेहळ्ळितिरुमलाचार्याणां अन्यत्र श्रीसाग्गेरिनारायणशास्त्रिणां च सविधेऽध्ययनं कृतम्। श्रीसाग्गेरिनारायण शास्त्रिणां मार्गदर्शनेन पुरन्यायाधीशस्य श्रीवैद्यनाथअय्यर्महाशयस्य परिचयः प्राप्तः। स च न्यायाधीशः दिवानशेषाद्रिअय्यर्महाशयस्य स्यालः। तद्द्वारा दिवानगृहे पुराणप्रवचनकार्यं प्राप्तम्। श्रीविरूपाक्षशास्त्रिणां प्रवचनपटुता विद्वत्ता च तेषां तोषदायिनी बभूव अत्र गुरुवर्याणां साग्गेरिनारायणशास्त्रिणां सदभिप्रायकथनमप्यासीत्।

अनन्तरं तपस्विनां महाविदुषां स्वामिरायाचार्याणां (१८२३ - १९०३) मुख्यशिष्याः। काश्या ग्वालियारप्रदेशस्य च राजानः श्रीस्वामिरायाचार्याणां विषयेऽत्यन्तं सादरास्तं गुरुं मेनिरे। श्रीशास्त्रिणः श्रीस्वामिरायाचार्याणां स्पृहणीयमार्गदर्शने न्यायमीमांसयोरध्ययनं कृतवन्तः इति कामकोटिमण्डली।

शेषाद्रिअय्यर्महाभागो वेदान्तं जिज्ञासते स्म। श्रीविरूपाक्षशास्त्रिणां सकाशे स्वापेक्षां स प्रकाशयामास। तदा श्रीविरूपाक्षशास्त्रिणो विनयेन, स्वस्यापि वेदान्तजिज्ञासा वर्तते, सुयोग्यगुरुलाभे सर्वं प्रमेयं सङ्गृह्य भवतां सकाशे निवेदयिष्यामीत्युक्तवन्तः। न तु व्युत्पत्तिबलेन यत्किञ्चित् कृतवन्तः। शास्त्रज्ञोऽपि गुरुमुखादेव ब्रह्म जिज्ञासेदिति नियमः खलु ?

सुप्रसन्नो दिवानमहाभागः स्वपत्रेण (recommendation) सह

श्री विरूपाक्षशास्त्रिणः शृङ्गगिरिजगद्गुरुश्रीसच्चिदानन्दशिवाभिनव-नृसिंहभारतीस्वामिनां महासन्निधानं प्रेषयामास। श्रीविरूपाक्षशास्त्रिणः, समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् इति श्रुत्युक्तदिशा गुरूपसदनं कृतवन्तः। महास्वामिनोऽपि शिष्यस्य शास्त्रान्तरपाण्डित्यादि पर्यालोच्य सन्तुष्टान्तरङ्गा वेदान्तरहस्यं सर्वं बोधितवन्तः। अत्रान्तरे महास्वामि-दिदृक्षया शृङ्गगिरिमागतानां दिवानमहाभागानां सकाशे - भवत्प्रहितं वस्तु समुत्कृष्टम्, इतोऽप्युज्ज्वलं तद् भविष्यति, अधुनैव न प्रेष्यते इति सानुग्रहमुक्तवन्तः।

श्रीविरूपाक्षशास्त्रिषु वेदान्तश्रवणप्रवणेषु तत्सकाशे बहवो वटवोऽध्ययनं न्यायादेः कुर्वन्ति स्म। अतः स्वाध्ययनमङ्गलानन्तरमपि श्रीविरूपाक्षशास्त्रिणस्तत्रैव किञ्चित्कालं स्थिताः। किन्तु माता-पित्रोर्निधनेन स्वग्रामं प्रत्यागन्तव्यमासीत्। किञ्चित्कालात्परं स्वाश्रयदातुः दिवानमहोदयस्यापि निधनवार्तागता। शृङ्गगिरिजगद्गुरवो यात्रार्थं प्रस्थिताः। सम्प्रति निराश्रयाः श्रीविरूपाक्षशास्त्रिणः स्वाश्रयदातारं चिन्तयन्ति स्म।

**अध्यापनवृत्तिः**

श्रीमज्जगद्गुरुशङ्कराचार्यसंस्कृतपाठशाला शृङ्गगिरिजगद्गुरु-श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिभिः धारापुरे (Dharwad) स्थापिता (१८९१) इति । श्रीविरूपाक्षशास्त्रिभिः स्वबाल्ये तत्राप्यध्ययनं ब्रह्मश्रीतम्मणाचार्याणां समये कृतमिति पूर्व-मेवोक्तम्। सम्प्रति वृत्त्यन्वेषणव्यग्रेषु श्रीविरूपाक्षशास्त्रिषु धारापुर (Dharwad) पाठशालायामध्यापयितुमामन्त्रणं प्राप्तम् । तदा श्रीविरूपाक्षशास्त्रि वर्या अत्यन्तसन्तोषेण समागताः(१९०४)। स्वैः



पूर्वमधीतायां पाठशालायां मुख्योपाध्यायाः सन्तो बहुभ्यो विद्यार्थिभ्यो न्यायवेदान्तादीन् सम्यग् बोधयामासुः। तत्र केषाञ्चन च्छात्राणां लघुपरिचयः -

**(१) ब्रह्मश्रीनवलगुन्दतम्मणशास्त्रिणः -**

श्रीशालिवाहनशके १८०५तमे चित्रभानुनामसंवत्सरे(१८८३)

गजेन्द्रगडसमीपस्थश्रीकालकालेश्वरस्य प्रसादेन सञ्जाता अध्ययनान्तरं कोलापुरे करवीरपीठाधीशैः (कुर्तकोटिमहाभागवतैः) स्थापितायां पाठशालायां किञ्चित्कालं प्रधानोपाध्यायाः, ततो धारापुरे (Dharwad) स्वैः अधीतायामेव पाठशालायां मुख्याध्यापकाः (१९१२- १६), ततः अमळनेरप्रदेशस्थापितस्य वेदान्ततत्त्वज्ञान-मन्दिरस्य प्राज्ञपाठशालायां मुख्योपाध्यायाः(१९१७-१९२२)। यौवन एव ज्वरग्रस्ता दिवं गताः (श्रीशालि वाहनशकवर्ष १९४४ दुर्मति-संवत्सरे पुष्यबहुल ४, १७.१.१९२२)।

धर्मोदयः, सन्ध्यावन्दनम् इत्यादयः संस्कृतप्रबन्धा एतेषां विद्यन्ते। सरोजिनी इति संस्कृतभाषामयी कादम्बरी(novel) अपूर्णा। एतै रचितः श्लोकः स्वदेशभक्तिं प्रकाशयति -

द्रष्टा बङ्किमचन्द्रिरस्तु भगवान् भूर्देवता भारती<br>
योगो यस्य निरस्य नैकमततां लाभे स्वराज्यस्य च।<br>
सोऽयं वङ्गविभङ्गतः श्रुतिगतो मन्त्रोऽस्तु पञ्चाक्षरो<br>
वन्दे मातरमस्मदीयविपदामुच्चाटनायान्वहम्।।

**(२) विद्वन्मणिब्रह्मश्रीनागेशशास्त्रिणः -**

उप्पिनबेटगेरिब्रह्मश्रीकृष्णशास्त्रिणां द्वितीयपुत्रा एते शास्त्रप्रपञ्चे

अद्वितीयाः। धारापुर(Dharwad) संस्कृतपाठशालाया मुख्योपाध्यायाः सन्तः (१९२० - ४१) योगवासिष्ठस्य भगवद्गीतायाश्चाविस्मरणीयं प्रवचनं वर्षद्वयपर्यन्तं नैरन्तर्येण कृतवन्तः। शृङ्गगिरि जगद्गुरु-श्रीचन्द्रशेखरभारतीमहास्वामिनः शुक्लसंवत्सरे शारदनवरात्रिसमारम्भे विद्वन्मणिः इति एतान् सम्भावितवन्तः। डा. भाण्डारकरमहोदयोऽ-प्येतान् न्यायशास्त्रविशारद (Doctor of Nyaya) इति सम्मानित-वन्तः। काश्यां ब्राह्मणसम्मेलन (१९२८) शृङ्गगिरिप्रतिनिधिभ्य एतेभ्यो विद्यालङ्कार इति प्रशस्ति र्दत्ता। कदम्बराजधान्यां जयन्तीपुर्यां (साम्प्रतिकवनवासिपत्तने) दक्षिणभारत ब्राह्मणसम्मेलनस्य (१९३०), बाहुपल्ली(रट्टीहळ्ळि) वैद्यकीयसम्मेलनस्य च सदसस्पतय एते सर्वत्र शास्त्रकथासु जयशालिनः। पश्चालम्भमीमांसाया हौत्रतत्त्वप्रकाशस्य कृष्णयजुर्वेदकौमुद्याः

(१) उप्पिनबेटगेरिब्रह्मश्रीकृष्णशास्त्रिणां ज्येष्ठपुत्रा ब्रह्मश्रीवेणीमाधव-शास्त्रिणोऽपि नैष्ठिकब्रह्मचारिणो ज्योतिःशास्त्रादौ विद्वांसः। साङ्गलिज्योतिष्यसम्मेळने(१९१८) ज्योतिर्भूषणबिरुदेन सम्मानिताः। एते भावकुतूहलाख्यग्रन्थस्य संस्कृतव्याख्यातारः।

(२) मीमांसादर्शनस्य प्रस्तावना ब्रह्मश्रीहानगल्विरूपाक्ष-शास्त्रिभिर्लिखितेति तत्पुस्तके प्रकाशितम्। किन्तु सा वस्तुतो हानगलविरूपाक्षशास्त्रिणां प्रियशिष्यैर्ब्रह्मश्रीनागेशशास्त्रिभि र्लिखितमिति धारवाडपाठशालाया इतिवृत्ताद्विज्ञायते। ब्रह्मश्री-भालचन्द्रशास्त्रिवर्यैरपि कथा प्रसङ्गे कदाचिदिदमुक्तं स्मर्यते। गुरुप्रणीतप्रबन्धे शिष्यनाम, शिष्यप्रणीते गुरुनाम कदाचिद् भवतीति नैतच्चित्रम्। आनन्दाश्रमग्रन्थालयाधिकृतो ब्रह्मश्री-



हानगल्विरूपाक्षशास्त्रिणां सकाशे मीमांसादर्शनस्य प्रस्तावना-लेखनाय यदा व्यजिज्ञपन्, तदा बहुव्यापृतास्ते स्वात्मनिर्विशेषं स्वप्रियशिष्यं तत्कर्तुं समादिशन् इत्यभ्यूह्यते।

गद्यपद्यात्मकं साहित्यं स्तोत्राणि गीतानि चैते प्रासादिकभाषया लिखितवन्तः । स्वीयपाठशालायां कृष्णेश्वरलिङ्ग-नारायणमूर्ति-दक्षिणामूर्तिप्रतिष्ठां निर्वर्तितवन्तः। सङ्केश्वरपीठस्य धर्माधिकारिण एते बेटश्रीनारायणमहाराजानां महानुष्ठानसमारम्भे प्रमुखव्यवस्थापका आसन्। महीशूर(Mysore)दशरात्रमहोत्सवे सर्वकारेण आमन्त्रिता अद्वितीया विद्वांस एते। स्वविद्यागुरवः [7]हानगल्विरूपाक्षशास्त्रिणो यदा संन्यासं स्वीकृतवन्तस्तदा कूडलिश्रीमठस्य सर्वाधिकारिणोऽपि संवृत्ताः। अविश्रान्तानामेतेषां ५०तमवर्षे ज्वरजाड्यवशात् श्रीशालिवाहनशके १८६३तमे (१९४१) शाश्वती विश्रान्तिः प्राप्तेति विषादस्य विषयः। एतेषां प्रमुखशिष्याः -

(१) हिण्डसगेरिशेषशास्त्रिणः -
साहित्य-न्याय-वेदान्त-धर्मशास्त्रविद्वांसः, प्रवचनप्रवीणाः, वैदिकधर्मभूषणम् ।

(२) कुन्दगोळगुण्डशास्त्रिणः -
साहित्य-न्यायशास्त्रविद्वांसः कुन्दगोळप्रौढशाला संस्कृताध्यापकाः।

(३) नरेगल्काशीनाथशास्त्रिणः -
काव्य-शास्त्रविद्वांसः प्रवचनपटवः वैदिकधर्मा-नुष्ठाने मार्गदर्शकाः

(४) मुळगुन्दकाशीनाथशास्त्रिणः -
काव्य-शास्त्रविद्वांसः प्रवचनपटवः वैदिक धर्मानुष्ठाने मार्गदर्शकाः।

(५) कवीश्वरदत्तात्रेयशास्त्रिणः -
न्याय-वेदान्तप्रवीणाः पुण्यपत्तनस्थतिलकमहाविद्यालये प्राध्यापकाः पुण्यपत्तनस्थसङ्केश्वरमठीयश्रीशङ्करविद्यापीठे अध्यापकाः ऋषितुल्या राष्ट्रपतिसम्मानिताः ।

(६) खरेविष्णुशास्त्रिणः -
सातारापत्तने कान्हेरिबायिवेदान्तविद्यापीठे अध्यापकाः ।

(७) वाडीकरश्रीपादशास्त्रिणः - कोलापुरे पाठप्रवचनरताः ।

(८) बडलिमार्तण्डदीक्षिताः -
न्याय-मीमांसाविद्वांसः मैसूरुमहाराजसंस्कृतविद्यालये पुण्यपत्तनस्थमीमांसामहाविद्यालये कर्नाटकविश्वविद्यालये च अध्यापकाः।

(९) बङ्कापुरयज्ञेश्वरशास्त्रिणः -
साहित्य-न्याय-वेदान्तशास्त्रविद्वांसः पुण्यपत्तनस्थवेदशास्त्रोत्तेजक -सभायां मैसूरुपाठशालायाञ्च परीक्षासु उत्तीर्णाः ।

(१०) कुकनूरदक्षिणामूर्तिशास्त्रिणः -
साहित्य-न्यायशास्त्रप्रवीणाः ।

(११) हळदीपुरदक्षिणामूर्तिशास्त्रिणः -
साहित्य-न्याय-वेदान्तविद्वांसः राणेबेन्नूरु प्रौढशालायां संस्कृताध्यापकाः ।

(१२) घनपाठिश्रीकण्ठशास्त्रिणः -
न्याय-वेदान्तविद्वांसः नञ्जनगूडु-शिवमोग्गा पत्तनयोः सर्वकारीय-विद्यालये संस्कृताध्यापकाः घनपाठिनः

(१३) तापसश्रीपाददीक्षिताः



(१४) चिरपुटकरनारायणशास्त्रिणः

(१५) अरकुडेकरमहादेवशास्त्रिणः

(१६) कोण्णूरनारायणभट्टाः

(१७) होम्बळगुरुनाथदीक्षिताः इत्यादयः।

अत्र कोलमुळगुन्दाभिजनश्रीपाददीक्षिततापसा विशेषेण उल्लेखनीयाः। एतेषां नाममात्रं श्रीपादः, श्रीपादौ नास्ताम्। प्रौढ-रमणीया एतेषां संस्कृतभाषा न केवलं विद्वन्मनोहारिणी। पामरा अपि श्रावं श्रावं सर्वे सन्तुष्यन्ति स्म। कवितासवितारोऽप्येते बहूनि प्रासङ्गिकपद्यानि निर्ममिरे। अनितरसाधारण पाण्डित्येन पङ्क्वोऽपि वाक्यार्थवेदिकालङ्घ्ने प्रबभूवुः।

**(३) उडुपिब्रह्मश्रीनारायणाचार्याः -**

न्यायशास्त्रविशारदा एते उडुपि संस्कृतमहाविद्यालये प्राचार्याः न्यायविद्यां द्वैतसिद्धान्तं च बहुकालं बोधितवन्तः। उपशान्तानामेतेषां माध्वसमुदायस्य मठाष्टकेऽपि महान् आदरो विद्यते।

**(४) सरस्वतीभूषणब्रह्मश्रीकिञ्जवडेकरवामनशास्त्रिणः -**

चतुःशास्त्रपण्डितानामेतेषां कार्यस्थानं पुण्यपत्तनम् (Pune)। तत्र धनिकानां सहकारेण एतैरेव मीमांसामहाविद्यालयः स्थापितः, यत्र यज्ञायुधानां सङ्ग्रहो विद्यते। महाराष्ट्रप्रान्ते मीमांसायाः पुनरुज्जीवनकारिण इति एते प्रख्याताः।

**(५) ब्रह्मश्रीबडलिचिदम्बरदीक्षिताः -**

महाराष्ट्रे द्विशतहायनेभ्यो विख्याताः श्रीमत्पूज्यचिदम्बर-दीक्षितास्तदभिधानेन विज्ञातानामेतेषां पूर्वजाः। धारवाडसंस्कृत-

पाठशालायां न्यायवेदान्तयोरध्ययनं विधाय (१९०० - १०) तत्रैव विना भृतकं सर्वाणि कार्याणि (अध्यापन-व्यवस्थापन-परिशीलन-परीक्षण प्रभृतीनि) निर्वर्तितवन्तः ६२तमे वत्सरे दिवङ्गताः ।

श्रीविरूपाक्षशास्त्रिणोऽत्र पाठशालायां गीताभाष्यं बहुमासपर्यन्तं प्रोचुः। घटनामिमां विद्वांसः श्रीशङ्करगीतामृतधारां वर्णयन्ति। शृङ्गगिरिजगद्गुरुश्री सच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिनामादेशानुसारं श्रीविरूपाक्षशास्त्रिणः प्राथमिकं श्रीशाङ्करभाष्यप्रवचनस्य सप्ताहं प्रारेभिरे (क्रि.श.१९०५)। तेन प्रवचनेन महास्वामिनोऽत्यन्तं प्रभाविताः, भवान् श्रीशारदाम्बायाः सम्पूर्णमनुग्रहं प्राप्तो विद्वान् इति उज्जगरुः।

जगद्गुरुश्रीचन्द्रशेखरभारतीमहास्वामिनः, श्रीविरूपाक्षशास्त्रिणो महातपस्विन इति कथनप्रसङ्गे वृत्तान्तमेकं वदन्ति स्म - श्रीशास्त्रिणो यदा श्रोतॄणां पुरस्तात् भाष्यप्रवचनं कुर्वन्त आसन्, तदा कश्चिद् ग्रामीणः प्रसभमागत्य, समीपप्रसवा तस्य गौः रक्तस्रावेण दिवङ्गतेत्युवाच। तदा श्रीविरूपाक्षशास्त्रिण स्तमुपवेष्टुमूचुः, नेत्रे निमील्य प्रवचनमनुववृतिरे। अनन्तरं विज्ञातं, सा गौः सवत्सा जीवतीति।

महात्मानोऽन्येषां उपकाराय मणिमन्त्रौषधानामुपयोगं सर्वदा कुर्वन्ति। अत्रेदमुदाहरणम् - कश्चित्किशोरः प्रकृत्या मूको बभूव। तं महाविद्वान् तस्य पिता मैसूरुमहाराजसकाशे निनाय। महाराजः श्रीविरूपाक्षशास्त्रिणां वैदुष्यं सामर्थ्यं च विजानन् श्रीशास्त्रिणां सकाशे नेतुमुवाच। स मूको विद्वान् जातः, मठाधिपतिः संवृत्त इति श्रूयते।

श्रीविरूपाक्षशास्त्रिणो श्रीमेधादक्षिणामूर्तिमन्त्रस्य प्रभावेण तं



जागरया मासुः। ते सप्तविंशे वयसि षोडश्याः पञ्चाक्षर्याश्च पुरश्चरणत्रयं निरवर्तयन्।[८]

सदा सत्कर्मानुष्ठानतत्पराणां तेषां तत् साधयितुं समय आसीत्।

चमत्कारोऽयं गुरुणा शिष्येण वा दर्श्यताम्, परिणामः समानः।

श्रीविरूपाक्षशास्त्रिणः गदगपत्तनस्य त्रिकूटेश्वरदेवालये [९]सोमयागं वितेनिरे, श्रीशङ्कराचार्याणां प्रतिमायाः प्रतिष्ठां च सविधि सभक्ति श्रद्धया निर्वर्तयामासुः। अत्रायं पूर्ववृत्तान्तः - धारापुर्याः(उव्हरीरव) श्रीमज्जगद्गुरुशङ्कराचार्यसंस्कृतपाठशालायां प्राचार्याः श्रीविरूपाक्षशास्त्रिणो वेदान्तं बोधयन्ति स्म। तदानीं धारापुरे सहस्रबुद्धेनारायणरायो नाम मण्डलाधिकारी(मामलेदार, महाबलधरः) बभूव। श्रीविरूपाक्षशास्त्रिणां श्रवणरमणीयं वेदान्तप्रवचनं श्रोतुं सोऽपि प्रत्यहमागच्छति स्म। एवं बहुतिथे काले व्यतीते धर्मपरायणस्य तस्याधिकारिणो गदगपत्तनं प्रति स्थानान्तरं संवृत्तम्। कृतार्थः कृतज्ञश्च नारायणरायो गमनात् प्राक् गुरुदक्षिणां दातुमैच्छत्। तदा श्रीविरूपाक्षशास्त्रिभिस्तेन चिकीर्षितं भूदानादिकं नोररीकृतम्। नित्यं अग्निहोत्रिभिस्तैः सोमयागं अनुष्ठातुं गुरुदक्षिणास्थानापन्नं तत्साह्यमपेक्षितम्। स्वैरपि तदर्थं पूर्वमेव सङ्गृहीतेन दशसहस्राधिकधनेन, श्रीनारायणरायपरिपूर्णसाह्येन च गदगपत्तन एव त्रिकूटेश्वरमन्दिरे सोमयागः प्लवङ्गसंवत्सरस्य वैशाखदर्शसमये साङ्गम् अन्वष्ठायि।

सहस्रचण्डीयागमपि ते अन्वतिष्ठन् इति उत्तरकर्णाटकप्रान्ते प्रवयसः स्मरन्ति। एवं धारवाडपाठशालायां यथा विरूपाक्षशास्त्रिवर्याणां शिष्यपरम्परा प्रवर्धिता, तथा बेङ्गळूरुशङ्करमठे शृङ्गगिरौ मैसूरु-

पाठशालायाञ्च तर्कशास्त्रे वेदान्ते चेदान्ते च नैके शिष्याः प्रशिष्याश्चासन् इति च्छात्रपरम्परा समेधिता।

जलोदररोगपीडिता पत्नी दिवङ्गता। सदाचारप्रवर्तनप्रवीणाः शृङ्गगिरिश्रीमठस्य सर्वाधिकारिणो ब्रह्मश्रीश्रीकण्ठशास्त्रिणो विच्छिन्नाग्निहोत्रं विधातुं प्रतिबबन्धुः। किन्तु द्वितीयपरिग्रहमनिच्छन्तः श्रीविरूपाक्षशास्त्रिणः स्वयमेव वृद्धाया अम्बाया बालानाञ्च भारं स्वीकृत्य कालक्रमेण निवृत्तिमार्गमाशिश्रियुः। श्रीविरूपाक्षशास्त्रिणां स्वभाव एव तादृशः। श्रीनारायणरायदत्तमपि धनं, स्वसङ्गृहीतेन सह यागानुष्ठानसमये व्ययीकृतम्। इदानीं श्रीमठसर्वाधिकारिभिर्दित्सितं धनं नैच्छन्।

श्रीविरूपाक्षशास्त्रिणः विद्वद्भिः साधारणजनैः संन्यासिभिः गृहस्थैः समानरीत्या बहुमन्यन्ते स्म। वेदान्तः तेषां जीवनसाधनं नासीत्। किन्तु जीवनमेव, श्वास एवासीत्।

'आसुप्तेरामृतेः कालं नयेद् वेदान्तचिन्तया'

इति स्मृतेः प्रत्यक्षनिदर्शनं क्वापि द्रष्टव्यमिति चेदपेक्ष्यते, तर्हि श्रीविरूपाक्षशास्त्रिवर्यास्तेषां शिष्यप्रशिष्याश्च नूनं द्रष्टव्याः। श्रीविरूपाक्षशास्त्रिणः संन्यासं स्वीकृत्य जगद्गुरुस्थानं नालमकार्षुः। किन्तु ततः पूर्वमेव स्वाध्यायप्रवचनाभ्यां इति वक्तव्यम्। न केवलं ग्रामवाससमये, यात्रासमयेऽपि ते न्यायशास्त्रबोधनं कुर्वन्ति स्म। स्नानसमये शौचसमये पूजासामग्रीसम्पादनसमये वा तेषां शास्त्रबोधनं नैरन्तर्येण प्रचलति स्म। तच्छिष्यपरम्परायामागतेन सुहृदा कदाचिद् उक्तम् - श्रीविरूपाक्षशास्त्रिणां प्रातः शौचं निमेषेषु न समाप्यते स्म। होरापर्यन्तं शौचालये स्थातव्यम्। किमर्थं वृथा कालहरणम् ?



तस्मिन् समये छात्रा न्यायग्रन्थं कञ्चन स्वीकृत्य बहिस्तिष्ठेयुः, तत्र किञ्चन वाक्यं पठेयुः। तदा श्रीशास्त्रिणस्तस्य वाक्यस्य पूर्वापराविरोधेन विस्तृतं विवरणं कुर्युरिति व्यवस्था। एवम् -

क्षणशः कणशश्चैव विद्यामर्थं च साधयेत्।

क्षणत्यागे कुतो विद्या कणत्यागे कुतो धनम्।।

इति सुभाषितानुसारेण गुरुभिः शिष्यप्रशिष्यैश्च विद्याव्यसनमनुभूतम्। तदनु धनं प्राप्तमेव। तदुक्तम् -

विद्या ददाति विनयं विनयाद् याति पात्रताम्।

पात्रत्वाद् धनमाप्नोति धनाद् धर्मं ततः सुखम्।।

अत्रेदं वक्तव्यम् - श्रीविरूपाक्षशास्त्रिणः सम्प्रदायशरणाः। कदाचित् कश्चित् वीथ्यां श्रीविरूपाक्षशास्त्रिणां सकाशे कस्यचन वेदमन्त्रस्य तात्पर्यं पप्रच्छ। श्रीविरूपाक्षशास्त्रिणः प्रतिवचनमदत्त्वा तस्य पादौ ददृशुः। अनन्तरं यदा कदाचित् प्रष्टव्यमिति प्रत्यूचुः। पुनरपि तेन पृष्टे व्याजक्रोधेनाधिचिक्षिपुः - अस्मिन् काले वेदार्थजिज्ञासा सर्वेषां वर्तते। पादयोरुपानहौ स्तः। वेदमन्त्रं उच्चरति।

एत एव बहिर्देशे नवीनन्यायशास्त्रं बोधन्ते। तत्रेदं कारणं भवेत् - न्यायशास्त्रमधीयमानमत्यन्तं लौकिकम्[10], शिष्टैश्च न परिगृहीतम्[11]। तद्बोधने न वेदवाक्यापेक्षा। यद् बोधने वेदापेक्षा, कामं तत्स्नानात् परं बोध्यताम्। यद् बोधने नास्ति वेदापेक्षा, कुतो वा तद् बहिर्देशे[12] वा न बोधनीयम्?

श्रीविरूपाक्षशास्त्रिणः पाठरसिका इति जानन्तो [13]वेदशास्त्ररसिकास्तान् अभितः सर्वदा भ्रमरा इव बभ्रमुः। श्रीविरूपाक्षशास्त्रिणस्तु

बहुव्यापृता लब्धेऽवकाशे क्षणमप्यपरित्यज्य पाठयाम्बभूवुः। लोकानां कल्याणाय जीवन्तः श्रीविरूपाक्षशास्त्रिसदृशा न केवलं प्रत्यक्षेण[१४], किन्तु परोक्षेणापि स्वविनेयान् अनुगृह्णन्ति। स्वर्णवल्लीमठाधीशाः परमपूज्यश्रीसर्वज्ञेन्द्रसंयमीन्द्रा वदन्ति स्म - अस्माकं विरूपाक्षशास्त्रिणो लौकिकं धनं किञ्चिद् दत्त्वा शिष्यानस्मादृशान् न प्रेषयामासुः। किन्तु सर्वस्यापि धनस्य सम्पादयित्रीं श्रीविद्याम्। अनया सर्वं लब्धुं शक्यम्।

अत एव तच्छिष्याणां गणना केनापि कर्तुं न शक्या। प्रायेण तत्समयवर्तिनः सर्वे तच्छिष्या एवेति वक्तुमुचितम्। तथापि केषाञ्चन तच्छिष्याणां विषयेऽवश्यं लेखनीयम्।

शृङ्गगिरौ [१५]जगद्गुरुश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारती-महास्वामिनां (१८७९ - १९१३) ब्रह्मीभावानन्तरं नियोजिताः [१६]श्रीचन्द्रशेखरभारतीमहास्वामिनः शृङ्गगिरिश्रीशारदापीठे जगद्गुरु-पीठमलमकार्षुः (१९१३ - १९५४)। श्रीविरूपाक्षशास्त्रिणो वेदान्ते विशेषतः प्रस्थानत्रयभाष्यं, तर्कं मीमांसां च तान् श्रावयामासुः (१९१२ - १५)। अत्र श्रीविरूपाक्षशास्त्रिणो जगद्गुरून् बोधयन्ति स्म इति कथनमनुचितम्।[१७]

मीमांसाकण्ठीरवाः श्रीवैद्यनाथशास्त्रिणोऽपि श्रीचरणानां पाण्डित्यस्य विषये एवं वदन्ति स्म। कदाचित् श्रीचरणा मीमांसाया न्यायमनुवदितुं प्रवृत्ताः, पाठसमये श्रीवैद्यनाथशास्त्रिभिर्यया आनुपूर्व्या कथितमासीत्, तयैव प्रत्यक्षरं प्रत्यपादयन्। तेन विस्मिताः श्रीशास्त्रिणः, मम सकाशे मीमांसां श्रुतवत्सु श्रीचरणा इव अर्थतः शब्दतश्च विषयं गृहीतवन्तो न सन्ति इति वदन्ति स्म।



विद्याधिदेवता श्रीशारदापरमेश्वरी श्रीविरूपाक्षशास्त्रिषु सर्वदा सन्निहिता श्रीजगद्गुरुसम्मुखं लीलया विलासं आतनोति स्म। नेदं स्व कपोलकल्पितं चिन्तनीयम्। अभिनवश्रीशङ्करभगवत्पादावतारैः शृङ्गगिरिजगद्गुरुश्रीसच्चिदानन्द शिवाभिनवनृसिंहभारतीमहास्वामिभिः पूर्वमेवेत्थं प्रार्थना कृता -

'सर्वज्ञं श्रीनृसिंहं कुरु शिवदयिते सत्वरं मद्विनम्रम्।'

इति श्लोकचतुष्टयमेतत्पादान्तं विद्यते। सत्यसङ्कल्पानां प्रार्थनामनु पूर्वाश्रमश्रीनृसिंहः सर्वज्ञोऽपि शृङ्गगिरौ सद्विद्यासञ्जीवनीपाठशालायां कल्याणपुर (Bangalore) गीर्वाणप्रौढविद्याभिवर्धिनीमहापाठशालायाञ्च विद्यामनवद्यां अधीत्य पण्डितशिरोमणिरासीत्। तत्र श्रीशङ्करमठे श्रीविरूपाक्षशास्त्रिणामपि मार्गदर्शनं श्रीमता प्रापि। तदा श्रीशास्त्रिणः मूकपञ्चाशिकामावर्तयितुमुपदिदिशुः। तेन स्तोत्रेण तोषिता श्रीकामाक्षी प्रथम एव समाधिसमये तं ब्रह्मचारिणं अन्वगृह्णात् इति श्रूयते। सर्वमिदं स्मरन्तः श्रीविरूपाक्षशास्त्रिणो श्रीमज्जगद्गुरु पाण्डित्यं न हि प्रयत्नसमधिगतम्, किन्तु दैवादानीतम् इति तान् प्रशंसन्ति स्म। एष वृत्तान्तो विदेशभाषायां लोकभाषायाञ्च प्रकाशिते (घ.ठ.) वेङ्कटरामप्रणीते शाङ्करदक्षिणाम्नायपीठाख्यग्रन्थे लिखितः ।

सुपरिचिताः श्रीविरूपाक्षशास्त्रिणः पुनरपि स्वविद्याव्यासङ्गार्थं शृङ्गगिरिश्रीजगद्गुरुभिराहूताः। श्रीशास्त्रिणां स्वतो वैराग्यं पाण्डित्यं च ज्ञातवन्त स्तुर्याश्रमा अपि श्रीजगद्गुरवो गृहस्थान् एतान् सर्वदा बहुमन्यन्ते स्म, स्वयमेव स्वजीवने श्रीशास्त्रिणां प्रभावविषये वदन्ति स्म। प्रतिदिनं पाठप्रकोष्ठप्रवेशमनु श्रीविरूपाक्षशास्त्रिणः सम्प्रदायमनु-सृत्य प्रक्रमे जगद्गुरुमहास्वामिनः नमस्कुर्वन्ति स्म। तेऽपि सपदि

समुत्थाय विरूपाक्षशास्त्रिभ्यः मानसीं बहुमतिं प्रीतिञ्च सूचयन्ति स्म। अनेन जगद्गुरुश्रीचरणानां तद्विषये कीदृशी भावना बभूवेति ज्ञायते। पाठसमाप्तिसमयेऽपि एषा प्रक्रिया पुनरावर्त्यते स्म। श्रीशास्त्रिणः स्वामिपादान् अभिवादयन्ते स्म। स्मेराननः महास्वामिनः सपदि समुत्थाय मानसीं बहुमतिं सूचयन्ति स्म।

अत्र प्रसङ्गसङ्गत्या किञ्चिद् उच्यते - आरामपुरे (हित्तलळ्ळिग्रामे) लब्धजन्मानः (१८८३) श्रीब्रह्मानन्दगणेशयोगिनः श्रीदत्तात्रेय-समुपासका बहुत्र यल्लापुर - दाण्डेलि - गोवाप्रदेशादौ श्रीदत्तमन्दिराणि निर्मिमिरे। एते योगिनो यौवने शृङ्गगिरेः श्रीनृसिंहवने किञ्चित्कालं वासमकुर्वन्। तस्मिन् समये दैवात् जगद्गुरुश्रीचन्द्रशेखरभारती-महास्वामिनां श्रीविरूपाक्षशास्त्रिणां च वेदान्तचिन्तनं प्रवर्तते स्म। अनेन योगेन सुप्रसन्नाः श्रीयोगिनो यावज्जीवं कथाप्रसङ्गे तत्स्मरन्ति स्म। स्नानार्थं मृत्तिकालेपं कुर्वता श्रीशास्त्रिणा संलाप इत्थं प्रवर्तते स्म -

श्रीयोगिनः - अद्यापि मृत्तिकालेपो न समाप्तो वा ?
स्नानं कदा समाप्यते ?

श्रीशास्त्रिणः - मम प्रतिरोम वेदान्तग्रन्थोऽस्ति।
किन्तु हन्त, कर्म न त्यक्तुं शक्यम्।

अनेन सम्भाषणेन श्रीशास्त्रिणां स्ववेदान्तज्ञानविषये कियान् आत्मविश्वास इत्यूहितुं शक्नमः। तथैव सहवासिभिः सह साधु सौहार्दम्।

एते श्रीयोगिनोऽनन्तरं काशीं गता वटमूले तिष्ठन्तः श्रीमदनमोहन



मालवीयानां श्रीगोकर्णरामशास्त्रिणां श्रीहेब्बारगणपतिशास्त्रिणाञ्च परिचयेन साङ्गवेदविद्यालयं व्रजन्तो द्राविडश्रीराजेश्वरशास्त्रिणां वेदान्तव्याख्यानं शुश्रुवुरित्यहोभाग्यम्। प्रकृतमनुसरामः।[१८]

संन्यासस्वीकारानन्तरं श्रीविरूपाक्षशास्त्रिणः कूडलिश्रीमठाधिपतयः। तत्रापि गुरुपरम्परा प्रकाशिता विद्यते। यद्यपि शृङ्गगिरिगुरुपरम्परायाः कूडलिशृङ्गेरिगुरुपरम्परायाश्च तुङ्गभद्रयोरिव क्वचित् प्राचीनसङ्गमः सम्भाव्यते, तथापि व्यतीतकालस्य यथावदैतिह्यं ज्ञातुं न शक्यमिति व्यत्यासः सोढव्यः। श्रीशङ्करभगवत्पादानां जन्मकालादिविषये मतभेदोऽस्ति चेदपि, सदाशिवसमारम्भा शङ्कराचार्यमध्यमा प्रकृताचार्यपर्यन्ता गुरुपरम्परा सर्वेषां स्वस्वमतानुसारेण निश्चितेति सा परम्पराऽनुबन्धे पृथगेव दर्शिता। अत्र पराक्रान्तं सूरिभिरित्युप-रम्यते।

शृङ्गगिरिश्रीमठस्य सर्वाधिकारिणो नञ्जनगुडुश्रीकण्ठशास्त्रिणः जगद्गुरु श्रीचन्द्रशेखरभारतीमहास्वामिनां श्रीविद्यानिवेदकाः। किन्तु नवावरणपूजायाः श्रीविद्योपासनायाश्च श्रीविरूपाक्षशास्त्रिण एव मार्गदर्शकाः।

**सच्चिदानन्देन्द्रसरस्वतीस्वामिनः(५.१.१८८० – ५.८.१९७५)**

श्रीविरूपाक्षशास्त्रिणां शिष्यपरम्परायां नदीनरसिंहपुरस्य (होळेनरसीपुरस्य) श्रीसच्चिदानन्देन्द्रसरस्वतीस्वामिनोऽपि सन्ति इति तदनुयायिभिर्जोघुष्यते। अत्र विद्वांसो न सम्मन्यन्ते। श्रीशेषाचल-शर्माणोऽस्मिन् विषये कदाचित् स्वासम्मतिं प्रददर्शुः।

यल्लम्बळसेग्रामीणः श्रीसुब्बरायः आस्तिकगृहे जातः प्रथमं

प्राथमिकपाठशालायामध्यापकः। गोन्दावल्या ब्रह्मचैतन्यमहाराजानां सकाशे श्रीराममन्त्रदीक्षा श्रीमता प्राप्ता। कुर्तकोटिमहाभागवतानां च प्रभाव एतदुपरि विद्यते। स्वस्य चरमे वयसि(१९४८) संन्यासः स्वीकृतः। नदीनरसिंहपुरे (Holenarsipur) दिग्विजयराममन्दिरं निर्मितम्। वार्तिककृतामवतारोऽ यमिति तदनुयायिनो मन्यन्ते।

कर्णाटकसंस्थानस्य सिंहासनपुरमण्डले(Hasan district) नदी नरसिंहपुरमस्ति। तत्र अध्यात्मप्रकाशकार्यालयं स्थापयित्वा(१९२०) वेदान्त प्रकाशन - प्रचारणादि स्वामिभिः नैरन्तर्येण यावज्जीवं विहितम्। कर्णाटलोकभाषायां देवभाषायां विदेशीयभाषायाञ्च एतैराहत्य २५० ग्रन्थाः प्राकाशिषत।

'आसुप्तेरामृतेः कालं नयेद् वेदान्तचिन्तया'

इति सूक्तेरुदाहरणं श्रीस्वामिनः इति श्रीकाञ्चीपरमाचार्यैरुक्तम्। परिशुद्धशाङ्करवेदान्तसिद्धान्त इति तत्संशोधनफलम् (१९१५) -

१. वेदान्तशास्त्रं सत्यस्य बोधकं विज्ञानम्।

२. आत्मजिज्ञासुरेव वेदान्तोपदेशं वस्तुतो जानाति।

३. वेदान्तः युक्त्या अन्तर्ज्ञानेन अखण्डानुभवेन आविष्कृतः।

४. अनुभवावसानत्वाद् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य (ब्र.सू.भा. १.१.२) इति श्रीशङ्करभगवत्पादानां श्रीसूक्त्या ब्रह्मज्ञानं न परोक्षम्।

५. आत्मनो ज्ञानार्थं सर्वेषां अस्ति अधिकारः।



**मैसूरुश्रीमन्महाराजः**

श्रीजयचामराजेन्द्रओडेयर्महाभागोऽध्यात्मप्रकाशसंस्थायाः महापोषकः । शृङ्गगिरिजगद्गुरुभिः द्वारकापीठाधीशैः श्रीकाञ्ची-मठाधीशैश्च धनसाहाय्यं विहितम्।

श्रीगौडपाद-श्रीशङ्करभगवत्पाद-श्रीसुरेश्वराचार्याणामनन्तरं वेदान्त-शास्त्रं तार्किकैरन्यथा नीतमिति श्रीस्वामिना निश्चितं मतम्। यद्यपि बहु विवादोऽस्ति सम्प्रदायतिरस्कारविषये एतेषाम्, तथापि वेदान्तग्रन्थानां अध्ययनेन अध्यापनेन संशोधनेन मुद्रापणेन प्रकाशनेन च केषाञ्चित् कर्णाटजनपदे वेदान्तव्यसनिनामेते प्रमुखा इत्यत्र नास्ति विवादः। एतेषां जीवनविषये कर्णाटकलोकभाषायां श्रीगुरु-चरितामृतनामकग्रन्थे श्रीलक्ष्मीनरसिंहमूर्तिना वर्णितम्, यत्र सम्प्रदाय-विषये विद्यागुरुविषये शृङ्गगिरिश्रीशारदापीठविषये च स्वामिनामादरोऽस्तीति स्पष्टम्। पूर्वाश्रमे वैसुब्बरावनामधेयानामेतेषां कालटीयात्रायां (१९१०) शाङ्करभाष्यवाचने शृङ्गगिरिजगद्गुरुश्रीसच्चिदानन्दशिवाभि-नवनृसिंहभारतीमहा स्वामिन एव प्रेरकाः। महामहोपाध्यायहानगल्-श्रीविरूपाक्षशास्त्रिणां समक्षं श्रीमद्भगवद्गीताभाष्यम्, पञ्चपादिकाभागः, छान्दोग्याद्युपनिषद्भागः, भामत्या सह ब्रह्मसूत्रभाष्यभागः पूर्वाश्रमे पर्यशील्यत। एतदुपज्ञो मूलाविद्यानिरासोऽपि श्रीशङ्करमठे श्रीविरूपाक्ष-शास्त्रिभिः कदाचित् कक्ष्यायां एतत्समक्षमेव समुदलेखि। किन्तु मौनमेव समाश्रितं समये समागतेऽपि समुपस्थितैः वैसुब्बरायैः समर्थनीये विषये।

अन्यस्मिन् सन्दर्भे श्रीशास्त्रिभिः, श्रीशङ्करभगवत्पादानां निराकरणं मूलाविद्यानिरासनव्याजेन न क्रियते खलु इति वैसुब्बरायान् पृष्ट्वा,

स्वासम्मतिश्च समसूचि। श्रीशङ्करभगवत्पादवाक्यानामसङ्गतं व्याख्यानं ये कुर्वन्ति, तान् शिक्षयितुं प्रयत इति प्रत्युक्तं वैसुब्बरायैः। अनेन श्रीभगवत्पादभक्ताः श्रीविरूपाक्षशास्त्रिणः सन्तुष्टा इति श्रीस्वामिना-मनुयायिनः।

मूलाविद्यानिरासप्रबन्धलेखनात् पूर्वं वैसुब्बरायाः अय्यर्उपाह्वाः कृष्णस्वामिनश्च श्रीविरूपाक्षशास्त्रिणां सविधे प्रमाणस्य, अविद्याया, विदेहमुक्तेश्च विषये विस्तरेण चर्चां कृतवन्त एव। श्रीकृष्णस्वामिनोऽपि वैदिकाः साम्प्रदायिकाः स्वगेहे वैदिकच्छात्राणामाश्रयदातारः।

श्रीविरूपाक्षशास्त्रिणो मैसूरुसंस्थाने आस्थानविद्वांस आसन्। तत्र ग्रन्थप्रकाशनार्थं धनसाहाय्यं कर्तुं वैसुब्बरायैरभ्यर्थितम् । तदा महाराजैः मूलाविद्यानिरासविषये श्रीविरूपाक्षशास्त्रिणः विचारिताः। श्रीविरूपाक्षशास्त्रिभिः निवेदितम् - ग्रन्थस्य शैली मनोहारिणी, धोरणी तु सम्प्रदायविरोधिनी ।

स्वपुत्राः यज्ञेश्वरशास्त्रिणः वेदान्ताध्ययनाय वैसुब्बरायसमीपे गच्छेयुरिति श्रीविरूपाक्षशास्त्रिणां विचार आसीदित्युच्यते मूलाविद्या-निरासवादिभिः। किमिदं सत्यं न वेति साम्प्रतं भगवानेव जानाति।

कदाचिद् वैसुब्बरायाः बेङ्गळूरु-कडूरुमार्गे धूमयानेन गच्छन्तश्चतुष्पञ्चहोरावधौ विवेकचूडामणिं आन्तमवलोकितवन्त इति श्रीमतां वेदान्तविषयिणी आसक्तिः कीदृशी आसीदिति ज्ञायते। एतादृशी मानसी स्थितिः संन्यासं स्वीकर्तुं तान् प्रेरितवती। अतः क्रि.श.१९४८तमवर्षे मत्तूरुश्रीबोधानन्देन्द्रसरस्वतीस्वामिनां समवधाने संन्यासं स्वीकृत्य सच्चिदानन्देन्द्रसरस्वतीनाम्ना विज्ञाताः वेदान्त-बोधनादिकमादेहत्यागं निर्वर्तितवन्तः।



शृङ्गगिरिजगद्गुरुश्रीमदभिनवविद्यातीर्थमहास्वामिनोऽपि श्रीशाङ्कर-कार्यार्थं समर्पितजीवितानां श्रीस्वामिनां वेदान्तप्रक्रियाप्रत्यभिज्ञाग्रन्थेन प्रभाविता नदी नरसिंहपुरमागता अध्यात्मप्रकाशकार्यालयं सन्दृश्य समतुष्यन्।

श्रीस्वामिनः माण्डूक्यरहस्यविवृतिं विरचय्य श्रीगौडपादेभ्यः समर्पयितुं मध्यप्रदेशे ॐकारेश्वरक्षेत्रं गता इत्येतत् तेषां प्रवृत्तिप्रकारं प्रकाशयति। वेदान्ते एतादृशी लौकिकी साधना अन्यादृशी।

श्रीस्वामिनां मतं साम्प्रदायिकैः श्रीविरूपाक्षशास्त्रिणां शिष्यैरपि न स्वीकृतम्। तदिदं श्रीस्वामिभिरेव प्रकाशितेषु ग्रन्थेषु स्पष्टम्।

धारवाडपत्तनस्थश्रीमज्जगद्गुरुसंस्कृतपाठशालायां प.प.कूडलि-श्रीवालुके श्वरभारतीस्वामिनां समक्षं पण्डितप्रकाण्डश्रीभालचन्द्र-शास्त्रिणां सूचनया पण्डितराजानां काशीस्थद्रविडराजेश्वरशास्त्रिणां शृङ्गगिरि(V.S.)श्रीरामचन्द्रशास्त्रिणां चाध्यक्ष्ये प्रवर्तितायां पण्डितवाक्यार्थसभायां मूलाविद्यानिरासवादो सम्यग्विचार्य निराकृतः। अयं विचारः पुस्तिकायां प्रकाशितोऽपि। एवमेवान्यत्र बहुत्र पण्डितै रयं विचारः पुस्तकेषु सभासु च तिरस्कृतः। तथापि नदीनरसिंहपुर-श्रीस्वामिनां अनुयायिभिरयं वादो न त्यक्तः। अत्र प्रमाणं दक्षिण-भारतशाङ्करवेदान्तविद्वद्गोष्ठी स्मरणसञ्चिका(२०११)।

अत्रेदमनुवक्तव्यम् - महात्मनां पूर्वव्याख्यातॄणां विषये नास्माभिः किमपि वक्तव्यमवशिष्यते। तैः सर्वैर्वेदान्तसम्प्रदायो न ज्ञायते, नदीनरसिंहपुर स्वामिभिरेव ज्ञायत इत्यपि न सुवचम्। श्रीविरूपाक्ष-शास्त्रिणां शृङ्गगिरिजगद्गुरु श्रीचरणानाञ्च सम्मतमित्यपि तदसम्मुखे

वक्तुं नोचितम्। श्रीविरूपाक्षशास्त्रिणां शिष्यैः, अन्यैश्च विख्यातैर्वेदान्तिभिः परिशुद्धवेदान्तपक्षस्तिरस्कृत इति न प्रस्मर्तव्यम्।

**परमपूज्यश्रीसर्वज्ञेन्द्रसरस्वतीस्वामिनः(१९०६-९०)**

एते सोन्दा-स्वर्णवल्लीमठाधीशाः। अयं मठः सह्यगिरेः शिरसि पत्तन-समीपे उत्तरकन्नडमण्डलेऽस्ति। श्रीविरूपाक्षशास्त्रिणां संन्यास-स्वीकारानन्तरं दीर्घघट्ट (उद्दगट्टि)मठे यदा वास आसीत्, तत आरभ्य मैसूरुपाठशालायामनारोग्यपर्यन्तं सहस्थिता एते प्रस्थानत्रय-भाष्यादिकं परिशीलितवन्तः। श्रीविद्योपदेशं प्राप्य श्रीगुरूणां शरीर-क्लेशे श्रीचक्रार्चनादिकं निर्वर्तितवन्तः। महाराजेन कारितेषु त्रिषु सुवर्णमयश्रीचक्रयन्त्रेषु प्रासाद एकम्, कूडलिश्रीमठ एकम्, स्वर्णवल्ली-श्रीमठे चैकं स्थापितम्। श्रीललिताचरणदासा इत्येव ख्याता एते श्रीमातुः साक्षात्कारेण कृतकृत्याः। अनुष्ठानसमये साक्षाच्छ्रीमाता सपर्यां गृह्णाति स्मेति दृष्टं कैश्चित्। स्वरचितैः संस्कृतपद्यैः प्रतिवर्षं शारदनवरात्रिसमये श्रीमातरं स्तुवन्ति स्म। प्रह्लादचरितमिति नाटकं लिखितमेतैः। इमे बहूनां वटूनां विद्यागुरवः। मैसूरुनगरवाससमये हुल्लेसरचिदम्बरशास्त्री, श्रीशुकशास्त्री, श्रीकोसगुळिसदाशिव शास्त्री, श्रीहासणगिरामभट्टः इत्यादय एतान् साधु सिषेविरे। ब्रह्मश्रीमहादेव शास्त्रिणः, ब्रह्मश्रीलिङ्गाशास्त्रिणश्च (उभयेऽपि कूडलिमठाधीशाः) तदा तत्रैवासन्।

बाल्ये गोकर्णगणेशशास्त्रिणां सकाशे नाटकान्तसाहित्यमेतैः श्रीमठ एवाधीतम्। नाटकान्तसाहित्य एव रुचिमन्त एते आधुनिकपाठ्यक्रमं न पुरस्कुर्वन्ति स्म। श्रीस्वामिनां विषये दिव्यदर्शनमिति बृहत्पुस्तकं स्वर्णवल्ली श्रीभगवत्पादप्रकाशनेन प्रख्यापितम्।



श्रीविरूपाक्षशास्त्रिणां विषये श्रीस्वामिनां महती भक्तिः। तेषां विनयादिसद्गुणाः सर्वैरनुसर्तव्या इति स्वशिष्यान् उपदिशन्ति स्म। यः कोऽपि ग्रन्थोऽस्तु, पाठयितुं पुस्तकमेव तैर्न स्वीक्रियते स्म, सर्वं कण्ठस्थमेवासीदित्यादि स्मरन्ति स्म। तेषां विनयस्य विषये शृङ्गगिरेः काचन घटना श्रीस्वामिभिरुल्लिख्यते स्म - कश्चन श्रीगुरुदेवदर्शनार्थं शृङ्गगिरिमागतस्तत्कृत्वा श्रीविरूपाक्षशास्त्रिणो द्रष्टुमैच्छत्। स पूर्वं तान् न दृष्टवानिति कस्यापि सकाशे श्रीविरूपाक्षशास्त्रिणः कुत्र सन्ति इति पप्रच्छ। स प्रत्युत्तरं दत्तवान्-जगद्गुरुश्रीचरणाश्चन्द्रशेखर भारतीमहास्वामिनो यत्र सन्ति, तत्र पार्श्व एव स्ववस्त्रेण वीजयन्त एव श्रीविरूपाक्षशास्त्रिणः।

**पण्डितप्रकाण्डश्रीभालचन्द्रशास्त्रिणः**

श्रीविरूपाक्षशास्त्रिणां शिष्याः प्रशिष्या वा एते इति कथनापेक्षया साक्षाच्छ्रीविरूपाक्षशास्त्रिण एव शरीरान्तरेण शोभन्त इति कथनं युक्तम्। पाण्डित्येन सह शिष्यवात्सल्यादिगुणास्तद्वदेवात्र द्रष्टुं शक्याः। सदाचारपरिपालनप्रेरणादि श्रीविरूपाक्षशास्त्रिण एव स्मारयति। श्रीशास्त्रिणां बहुमानार्थं ब्रह्मश्रीनाम्नी स्मरणसञ्चिका शिष्यैः प्रकाशिता(२००९), यत्र श्रीशास्त्रिणां पूर्णचित्रणमस्ति। एतेषां प्रशस्तयः -

१. पण्डितावतंसः(१९४३) - द्वारकायाः श्रीजगद्गुरुभिर्दत्तम्।
२. विद्वद्रत्नम् (१९७५) - साङ्गवेदविद्यालयः काशी।
३. सदाचारप्रवर्तकः(१९६४) -कूडलिश्रीवालुकेश्वरभारती-स्वामिभिः दत्तम्।
४. विद्यामहोदधिः - श्रीशकटपुरश्रीस्वामिभिर्दत्तम्।

५. ज्योतिष्यगणिताचार्यः - विज्ञानकेन्द्रपरिषत्, दिल्ली

६. तपस्विजी महाराजः - अविच्छिन्नपरम्पराकूडलिश्रीयोगाभिनव-नृसिंहभारतीस्वामिभिर्दत्तम्।

**ब्रह्मश्रीशङ्करशास्त्रिणः के.पि.**

केरळेषु कालट्यां लब्धजन्मानः श्रीशास्त्रिणः श्रीविद्योपासकानां विदुषां श्रीनारायणशास्त्रिणां सोदराः कल्याणपुरी(Bangalore)मागत्य वेदं तर्कं मीमांसां वेदान्तञ्च विदुषां सकाशाद् अधीतवन्तः। कूडलिजगद्गुरुश्रीवालुकेश्वर भारतीमहास्वामिनः श्रीविद्यां उपादिशन्। न्यायशास्त्रस्य गुरवः हानगल् श्रीविरूपाक्ष शास्त्रिणः तुर्याश्रमं स्वीकृत्य जगद्गुरुविद्याभिनववालुकेश्वरभारती महास्वामिनः सन्तः श्रीविद्योपासनं एतेभ्यो बोधयामासुः। शृङ्गगिरिजगद्गुरु श्रीचन्द्रशेखरभारतीमहास्वामिनो महामन्त्रं उपदिदिशुः।

वेदान् उपनिषदश्च आधृत्य श्रीविद्यां उपदिशतां एतेषां साधक-शिष्या असंख्येयाः सन्ति । तेषु सन्ति बहवः संन्यासिनोऽपि। स्वर्णवल्लीमहासंस्थानस्य साम्प्रतिकाः मठाधीशाः श्रीगङ्गाधरेन्द्र-सरस्वतीस्वामिनः श्रीविद्याविषये एतेषां सूचनामङ्गीकृतवन्तः। कालक्रमेण कौलतन्त्रे समागतान् दोषान् दूरीकृत्य दक्षिणामूर्तिसम्प्रदाये श्रीशङ्करभगवत्पादप्रदर्शितं साधुमार्गमेते प्रदर्शयन्ति स्म । वरिवस्यारहस्यभाष्यम्, त्रिपुरामहिम्नःस्तोत्रभाष्यम्, षोडशसंस्कार-विधिः इत्यादयो ग्रन्था एतैः प्रणीताः। श्रीराजराजेश्वर्या स्तुतयो बह्व्यः एतैरारचिताः। प्रशस्तयः -

(१) आस्थानविद्वान् (शृङ्गगिरिश्रीशारदापीठम्)

(२) भारतराष्ट्रपतिसुवर्णपदकम् इत्यादयः।



**श्री(D.V.)गुण्डप्पमहोदयः**

साहित्यक्षेत्रे सुविख्यातः श्री(D.V.)गुण्डप्पमहोदयः (१७.३.१८८७-७.१०.१९७५) श्रीविरूपाक्षशास्त्रिणां शिष्येष्वन्यतमः। स्वयं गुण्डप्पमहोदयेनायं विचारो ज्ञापकचित्रशालायां लिखितः (संपुट १, पुटसंख्या ४२)। वैदिकधर्म सम्प्रदायपरिपालयितॄणां विषये गुण्डप्प-महोदयेन लिखितेषु प्रबन्धेषु श्रीविरूपाक्ष शास्त्रिणां विषये विस्तरेण लिखितम्।

अस्य पूर्णं नामधेयम् - देवनहळ्ळि वेङ्कटरमणय्य गुण्डप्प इति। डि.वि.जि.(D.V.G.) इत्येव सारस्वतलोकेऽयं विख्यातः। मुळबागिलु-पत्तनेऽस्य जन्म। कार्यक्षेत्रं कल्याणपुरम्(Bangalore)। तत्त्वज्ञानी (philosopher), लेखकः (writer), कविः, पत्रकार (journalist) इति विश्रुतः। स्वजन्मभूमौ प्राथमिकविद्याभ्यासं विधाय, मैसूरु-महाराजप्रौढशालां गतः। तत्रानुत्तीर्णो विद्याभ्यासं समाप्य, कल्याणपुरे(Bangalore) जीवनवृत्तिं समाश्रितः।

परीक्षायामनुत्तीर्णस्यापि गुण्डप्पमहोदयस्य प्रबन्धादिकं पदवी (degree)कक्ष्यायां पाठ्यम्। तस्य ग्रन्थाः संशोधनप्रबन्धानां (research thesis) विषया इत्यवश्यं स्मर्तव्यम्। वेदान्ते कन्नड-संस्कृतादिषु राजनीतौ अभियन्तृक्षेत्रे (engineering field) पाश्चात्यसाहित्ये यवन-साहित्ये चायं निपुणः।

श्रीमद्भगवद्गीतातात्पर्यम् अथवा जीवनधर्मयोगस्तेन लोकभाषायां लिखितो वेदान्तग्रन्थः। मङ्कुतिम्मनकग्ग इति कन्नडभाषाया मुक्तकानि वेदान्तसम्बन्धीनि। श्रीविरूपाक्षशास्त्रिणां सकाशे बेङ्गळूरुश्री शङ्करमठे तेन वेदान्तोऽधीतः।

प्रख्यातेनाभियन्तुः (engineer) विश्वेश्वरय्यमहोदयस्य सहकारितया कृष्णराजसागरनिर्माणे तेन कार्यं कृतम्। स्वातन्त्र्यसङ्ग्रामे लोकमान्यतिलकस्य महात्मगान्धिनश्चायं सहमतः। पाश्चात्यसाहित्ये शेक्स्पियर्नाटकानां ग्रीक नाटकानाञ्च केषाञ्चन कन्नडभाषान्तरं तेन कृतम्। उमरन ओसगे इति कन्नड भाषान्तरं तस्य यवनसाहित्यज्ञानं ज्ञापयति।

गोखलेसार्वजनिककार्यकारिसंस्थायाः (Gokhale Institute of Public -Affairs) तस्य च सम्बन्धो महान्। भारतीयसर्वकारः (Union Govt of India) पद्मभूषणबिरुदेन तं सम्मानयामास(१९७४)। कर्णाटक सर्वकारस्तस्य कन्नडसाहित्यसेवायै ९०००० रूप्यकाणां पारितोषकं ददौ (१९७०)। किन्तु सर्वं धनं तेन गोखलेसंस्थायाः स्थापनाय दत्तम्। भारतीयपत्रकार्यालय(Indian Post Office, मेघदूतम् इति)संस्थया तस्य स्मारकं मुद्रापत्र(stamp)मेकं प्रकाशितम् (१९८८)। अस्य प्रतिमा बेङ्गळूरुबसवनगुडिप्रदेशे स्थापिता(२००३)।

**सूरिरामचन्द्रशास्त्रिणः**

अनेकेषां छात्राणां उपाध्याया एते श्रीमद्भागवतादिप्रवचनकुशलाः। खण्डनखण्डखाद्यव्याख्या, गणेशलीलावैभवम्, गणेशोपासनाप्रकाशः, प्रयोगरत्नमालाप्रकाशः, व्यासतात्पर्यनिर्णयः, धर्मदीपः, मध्यमव्यायोगः, श्रीमद्भगवद्गीताया ब्रह्मानन्दगिरिव्याख्याभाषान्तरम् इत्यादिग्रन्थान् लिखितवन्तः प्रकाशितवन्तश्च। बोधायनसूत्रग्रन्थस्य बोधायनीयवेङ्कटेशीयप्रयोगरत्नमालायाश्च संस्कर्तारः। एतेषां वेदान्तरत्न-विद्यालङ्कार-विद्वन्मणि-प्रभृतयो बिरुदविशेषाः सन्ति। श्रीविद्योपासका एते रसालपुरवर्णनमहाकाव्यमपि लिखितवन्तः।



**बोम्बेवेङ्कटरमणशास्त्रिणः**

सूरिरामचन्द्रशास्त्रिणां समकालिका एते विद्वत्पदवीं प्राप्तुं वर्षमेकं प्रतीक्षितवन्तः। तत्र कारणम् - उभयेषां पारितोषकलाभः। एकस्मिन् वर्षे उभयेषां परीक्षायां कृतायामेकेन प्राथम्यं न प्राप्येतेति शिष्यवत्सलैः श्रीविरूपाक्षशास्त्रिभिः प्रतिबोधिताः।

हरिहरपुरमठे स्थित्वा तत्रत्यपरमपूज्यस्वामिनां वेदान्तचिन्तनं सम्पादितवतामेतेषां बहवः सन्ति शिष्याः। एतेषामभिनन्दनार्थं काचन स्मरणसञ्चिका कन्नडभाषायां प्रकाशिता विद्यते। वाक्यार्थसभासु भागं वहन्तो राज्यप्रशस्त्यादिकं प्राप्तवन्तः।

**श्रीविरूपाक्षशास्त्रिणामुपाधयः**

**(१) विद्यावाचस्पतिः**

राक्षसनामसंवत्सरे (१९१३ - १४) काश्या भारतमहामण्डले अखिल भारतविद्वत्सभा संवृत्ता। श्रीविरूपाक्षशास्त्रिणः शृङ्गगिरि-प्रतिनिधयः सन्तस्तत्र गताः शास्त्राणां दुरूहेषु विषयेषु चर्चां कृतवन्तः। तत्रत्याः श्रीशास्त्रिवर्याणां पाण्डत्येन विस्मिता विद्यावाचस्पतिरिति बिरुददानेन सम्मानयामासुः।

**(२) न्यायपञ्चाननः**

नळनामसंवत्सरे (१९१५) शृङ्गगिरौ कुम्भाभिषेकमहोत्सवः। तत्र जगद्गुरुश्रीचन्द्रशेखरभारतीमहास्वामिनः न्यायपञ्चाननः इति श्रीशास्त्रिवर्यान् सभाजयामासुः।

**(३) विद्वद्वेतनम्**

अस्मिन् महोत्सवे शृङ्गगिरिमागता मैसूरुमहाराजाः नाल्वडि

कृष्णराजेन्द्रमहाप्रभवः श्रीविरूपाक्षशास्त्रिवर्याणां पाण्डित्यं पुनर्विज्ञाय मैसूरु महासंस्थानस्य मासिकविद्वद्वेतनं जुघुषुः।

श्रीविरूपाक्षशास्त्रिभिः धारवाडसंस्कृतपाठशालायां प्रतिमासं २० रूप्यकाणि लभ्यन्ते स्म। अन्ते तेषां जीवनसन्ध्यायां मैसूरुमहाराजेन त्रिशताधिकरूप्यकाणि प्रत्तानि।

**(३) वेदान्तोपाध्यायः**

कल्याणनगर्याः श्रीशङ्करमठे विद्यामानायां महापाठशालायां श्रीशास्त्रिवर्या वेदान्तोपाध्यायस्थानं अलञ्चक्रुः(१९१७)। मैसूरुनगरस्य महाराजसंस्कृतपाठशालायां वेदान्तविभागे प्रधानाः (१९२६)। मैसूरुमहाराजा अपि शास्त्रिवर्यान् प्रासादं आमन्त्र्य वेदान्तं बहुधा श्रुतवन्तः। श्रीविरूपाक्ष शास्त्रिणः सम्प्रति १०० रूप्यकाणि प्रतिमासं प्राप्नुवन्ति स्म।

**(४) विद्यानिधिः**

दुन्दुभिसंवत्सरे (१९२२) श्रीमन्महाराजैः नवरात्रिविशेषसभायां विद्यानिधिरिति सराङ्कबिरुददानेन सत्कृतम्।

**(५) महामहोपाध्यायः**

रुधिरोद्गारिसंवत्सरे (३.६.१९२३) भारतचक्रवर्तिना जार्जप्रभुणा महामहोपाध्यायबिरुदेन समादृतम्।

वार्तापत्रे वार्तैषा पूर्वमेव प्रकाशिता। किन्तु श्रीविरूपाक्षशास्त्रिभिः पूर्वमिदं न ज्ञातमासीत्। कर्णाकर्णिकया बान्धवैरपि ज्ञातम्। ते श्रीविरूपाक्ष शास्त्रिणां सकाशे उक्तवन्तः। तदा आश्चर्यचकिताः श्रीविरूपाक्षशास्त्रिणः संशयेन पुनः पुनः पृष्टवन्तः - भवता सम्यग्



दृष्टं वा ? मम नामैव तत्रास्ति वा ? तादशं महत् पदं मया लभ्यते वा ? लभ्यते चेदपि भवता अन्यत्र न वक्तव्यम्। हास्यास्पदमिदमिति सर्वे वदेयुः इति।

अस्मिन् काले प्रशस्त्यर्थं किं किं न क्रियते जनैरित्यालोच्यते चेत् श्रीविरूपाक्षशास्त्रिणां निस्पृहस्वभावो ज्ञातुं शक्यते।

**(६) आस्थानविद्वान्, धर्माधिकारी**

काश्या अखिलभारतवर्षीयब्राह्मणमहासम्मेलने मैसूरुसर्वकारस्य प्रतिनिधयः सन्तः उपन्यासान् विधाय कीर्तिशालिनः बभूवुः(१९२८)। अनेन सन्तुष्टा महाराजाः शास्त्रिवर्यान् आस्थानधर्माधिकारीति मानयामासुः।

कुन्तलदेश(घरीपरींरज्ञर)लोकभाषासाहित्ये ज्ञापकचित्रशाला सुप्रतीता, यत्र वैदिकधर्मप्रवणानां विषयेऽपि विवृतम्। सर्वैः समादरणीयस्तस्या लेखकः श्रीविरूपाक्षशास्त्रिवर्याणां शिष्यः। तेन लिखिता काचन घटना उदारचरितानामुदात्तप्रसङ्गसङ्ग्रहे कथयित्रा मान्यवेङ्कटाचलशास्त्रिणा योजिता। तत्रत्यो विषयो यथावदनूद्यते।

**कस्या विद्याया निधिस्त्वम् ?**

प्रसिद्धसंस्कृतविद्वद्भ्यो हानगल्विरूपाक्षशास्त्रिभ्यो भारतसर्वकारो (Union Govt. of India) महामहोपाध्यायबिरुदं ददौ। महीशूर-पुर(Mysore)स्य श्रीमन्महाराजा विद्यानिधिबिरुदं ददुः। तच्छिष्यवर्गेण तेषां सत्कारार्थं समारम्भमायोजयितुं समितिः कृता। शिष्यवर्गेऽन्तर्गता (B.V.)लक्ष्मणराय(D.V.)गुण्डप्प प्रमुखाः समितावासन्।

अस्य सत्कारस्य शास्त्रिणः पूर्वं न सम्मताः। किमपि किमपि

व्याजमाविश्चक्रुः। निर्बन्धबाहुल्ये सति द्रक्ष्याम इत्यूचुः। सन्मानसभा कस्मिंश्चिद् भानुवासरे सायं पञ्चवादने निश्चिता। स्थलं कल्याणपुर्याः (Bangalore) शङ्करमठः। शास्त्रिभ्यो ज्ञापयितुं प्रायश्चतुर्वादने तद्वहं (D.V.)गुण्डप्पप्रभृतयो गताः। गृहे शास्त्रिणो नासन्। गमनात् परं बहुसमयो व्यतीत इत्यवोचन् गेहीयाः। पादोनपञ्चवादनपर्यन्तं तेषां कृते इतस्ततो गवेषणमपि कृतम्। अन्ते गुरुदेवालयस्य पश्चिमभागे, अन्तर्नाळस्य पार्श्वे तृणेषु आसीना दृष्टाः। किमिदमत्रेति पृष्टे सति, गुरव आयान्ति, तदर्थमित्यब्रुवन्। सद्यः सन्ति किल इत्यालोच्य, पुनर्दशनिमेषान्तरं समारम्भाय नेतुं दृष्टे, पुनर्न दृष्टाः। भूतं भूतमिति रथ (car) उपविश्य चामराजविपणेः (Chamarajpet) पञ्चमवीथ्यां शिष्यवर्गोऽयं शास्त्रिणामन्वेषणं चकार।

समीप एव शास्त्रिणो वेगेन पदं न्यस्यन्तो यान्ति स्म। क्व प्रयाणम् इति (D.V.)गुण्डप्पपृष्टे, शास्त्रिणो अस्मद्गुरुगृहम् इत्यगदन्। पुनः के वो गुरवः इति पृष्टे, विद्वांसो शिग्रुपल्ली (नुग्गेहळ्ळि) तिरुमलाचार्याः इत्यवदन्। अस्तु। इदानीं तान् उभयान् रथ उपवेश्य सर्वे वेगेन शङ्करमठमागताः।

सन्मान्यानां विरूपाक्षशास्त्रिणां विशेषेण पीठमेकं सादयित्वा, तदुपरि लघु रत्नकम्बलमास्तीर्य सज्जीकृतमासीत्। शास्त्रिणः किं कृतवन्तः? तस्मिन् पीठे स्वगुरून् शिग्रुपल्ली(नुग्गेहळ्ळि)-तिरुमलाचार्यान् उपवेश्य गुरुवन्दनाया उपक्रमं चक्रुः। तेषां गुरुवन्दनस्य पद्धतिर्नाम दशवारं वा द्वादशवारं वा साष्टाङ्गं नमस्करणम्।

अधुना शिष्या मठस्य उद्ग्रहणेऽन्विष्य निमेषमात्रेण अन्यदेकं मणिपीठं पार्श्वे निहितवन्तः। शास्त्रिणस्तस्मिन्मणिपीठे आसीनाः। ततः



समारम्भस्य अङ्गतया भाषणानि वृत्तानि। सत्कारस्य प्रत्युत्तरं दातुं शास्त्रिणां समयः समागतः। शास्त्रिणोऽभाषन्त-

भवन्तः सर्वे बहु सन्तुष्टाः। अहमपि सन्तुष्टः। त्वं विद्यानिधिः, त्वं महामहोपाध्यायः इति कथने को वा न तुष्येत्। इदं नो महाराजैर्दत्तम्, सार्वभौमसर्वकारेण प्रत्तम्। इदं सर्वं सन्तोषस्य स्थानमेव। किन्तु अन्यः कश्चिद् महाराजः अस्ति किल, सार्वभौमापेक्षया महान् राजा, धर्मराजः पितृपतिः। कस्मिंश्चिदेकस्मिन् दिने तत्र गन्तव्यं भवेत्। तदा स पृच्छेत् - हन्त, तेन दत्तम्। त्वया गृहीतम्। कस्या विद्याया निधिस्त्वम् इति पृच्छति वयं किं वदेम ?

समारम्भः समाप्तः। शिष्यैरनुगताः शास्त्रिणो गृहं नीताः। गृहे स्त्रियो गृहस्य पुरोभागे रङ्गवल्लीं विलेख्य, शास्त्रिणामार्तिक्यं कर्तुं सन्नद्धाः। शास्त्रिणस्तदा स्वपार्श्वे स्थितानां वैद्यनाथशास्त्रिणां करमाकृष्य, तस्मिन् रङ्गवल्ली-मणिपीठेऽ स्थापयन्। हसन्तो वैद्यनाथशास्त्रिणः, क्षणमेकं तद्वचः किं न श्रोतव्यम्, किं न ता वो दुहितरः इत्यवोचन्। एतत् प्रति विरूपाक्षशास्त्रिणः, ता भवन्तोऽपि वो दुहितॄः पश्यन्ति खलु इत्यवदन्।

**परोपकारः**

बहुवेदिनः श्रीविरूपाक्षशास्त्रिणः शाक्ततन्त्र इव स्वोपाध्यायानां वैष्णवागमेऽपि निपुणा आसन्। कश्चन कुटुम्बी तत्पित्रा श्रावितां कथां उक्तवान् - उत्तरकर्णाटके गदगपत्तनसमीपे कस्मिंश्चित् ग्रामे काचन अभिचारिणी, वाममार्गेण बानामती-मरसेरीकर्मणा नाशयितुं प्रभवति स्म। अस्य पुरुषस्य पितामहः तस्य ग्रामस्य लेखाधिकारी (शानुभोगः, कुलकर्णी) स्त्रियं तां तस्या वाममार्गकारणेन बहिश्चकार,

येन तस्या द्वेषस्य भाजनं बभूव। सर्वो ग्रामः अवर्णनीयस्य रोगस्य सङ्कटस्य च अनुभवं प्राप्नोत्। पाषाणखण्डा गृहस्यान्तः वर्षमिव पतन्ति स्म। पाकशालायां विषपूर्णं वस्तु दृश्यते स्म। तस्य कन्या प्रतिरात्रि रजस्वला भवति स्म, तस्य स्नुषा गर्भस्रावमनुबभूव। भीताः सर्वे वेदान्त इव मन्त्रशास्त्रे विशारदानां हानगल् विरूपाक्षशास्त्रिणां सविधे शरणं गताः।

श्रीशास्त्रिणः ग्रामस्य अलौकिकं अन्धकारं निवारयितुं इन्द्राक्षीमन्त्रस्य प्रयोगमारेभिरे। अनन्तरं वनदुर्गाया बगलामुख्याश्च मन्त्रेण दिशो बबन्धुः। ततः प्रत्यङ्गिरामन्त्रसम्पुटीकरणेन अष्टाक्षर्याः सुदर्शनमन्त्रस्य च प्रयोगं अनुतस्थुः। ग्रामस्य सर्वा बाधा अदर्शनं गताः।

अत्र प्रत्यङ्गिरायाः सुदर्शनस्य च सम्पुटीकरणमसाधारणम्। वनदुर्गा सप्तशत्याः परिशिष्टे रहस्यमिदमस्ति। प्रयोगसारेऽपि वैष्णव्याः प्रत्यङ्गिरायाः, अष्टाक्षर्याः सुदर्शनस्य च सम्पुटीकरणं दृश्यते।

**तीर्थयात्रा**

शास्त्रानुसारेण नित्यकर्म-जपाद्यनुष्ठानं न कदापि त्याज्यम्। किन्तु तीर्थयात्रासमये तद् अनुष्ठातुं सौकर्यं न स्यात्। यात्रासमये तत् कर्तव्यं चेत् क्लेश एव स्यात्। श्रीविरूपाक्षशास्त्रिणः यात्रासमयेऽपि नित्यकर्म यथावत् अनुतिष्ठन्ति स्म। विलम्बो जात इति कदापि तैः प्रायश्चित्तार्घ्यमपि न दत्तं स्यात्। ते प्रायेण यात्रां न कुर्वन्ति स्म। यदि नूनं प्रयाणं करणीयम्, तर्हि नित्यकर्मानुष्ठानार्थं पूर्वमेव निश्चित्य यात्रामारभन्ते स्म। यथा - शृङ्गगिरिं प्रति सदोर्थं गन्तव्यं चेत्, धूमयानद्वारा ते गच्छन्ति स्म। सायं समये समागते यानाद् अवरुह्य



नित्यकर्म समाप्य पुनर्यात्रामारभन्ते स्म। तत्र(कडूर)निस्थानाधिकारी श्रीशास्त्रिणामागमनं प्रतीक्षते स्म। अपस्मारपीडितायास्तस्य सुताया रोगनिवृत्तिः मन्त्रपूतेन भस्मना जातेति स श्रीशास्त्रिणां शिष्य आसीत्। यानादवरुह्य श्रीशास्त्रिणस्तमनुगच्छन्ति स्म, तद्दर्शितदिशा कूपे स्नानं समाप्य नित्यकर्म निर्वर्त्य क्षिप्रं यानमारोहन्ते स्म। श्रीशास्त्रिणामनुग्रहं प्राप्तैः घटना एषा नैकैर्महात्मभिः स्मर्यते स्म। श्रीविरूपाक्ष शास्त्रिणां काशीयात्रासमये सौकर्यार्थं मैसूरुमहाराजेन पार्थक्येन पट्टिकाशकटः व्यवस्थापित इति स्मर्यते सम्प्रदायशरणैः पण्डितैः।

**धर्मप्रेरणा**

श्रीविरूपाक्षशास्त्रिभिः बेङगळूरुश्रीशङ्करमठे परःशतवैदिक-लौकिकेभ्यो वेदान्तप्रवचनं कृतम्। तेषां साहाय्येन रुधिरोद्गारिसंवत्सरे हानगलदत्तम्भट्ट महोदयानां याजमान्ये सोमयागः कल्याणपुरस्य (Bangalore) श्रीशङ्करमठ एव कारितः।

ततो मैसूरुमहाराजानामपेक्षानुसारेण महाराजसंस्कृतमहापाठशालायां वेदान्तोपाध्यायपदं विभूषयामासुः(१९२६)। तस्मिन् समये तत्र सुवर्णमहोत्सवसमारम्भार्थं समागतानां विश्वविख्यातानां श्रीमदनमोहन मालवीयानां सम्मुखे धर्मशास्त्रचर्चा प्रवृत्ता।

धर्मपक्षपातिनः श्रीविरूपाक्षशास्त्रिणः कस्मिंश्चित् सन्दर्भे सर्.मिर्जा एँ इस्मायिल् साहेबस्य कार्यालयमपि गताः। एवमेव प्रसङ्गान्तरे टाज् पिरान साहेबस्य सकाशे गताः।

दर्भङ्गानगरेऽखिलभारतमहामहोपाध्यायसम्मेलनमासीत्(१९२६)।

तत्र भागभाजः श्रीविरूपाक्षशास्त्रिणो नैकानि धर्मसम्बन्धीनि वाङ्मुखानि विधाय, मैथिलप्रान्तेऽपि कीर्तिं ख्यापयामासुः। एवमेव काश्याम् (१९२८) अन्यत्र च धर्मं स्वोपंन्यासेन प्रकाशयामासुः। इदमेव सामाजिककार्यं श्रीविरूपाक्षशास्त्रिणाम्। कापि संस्था न स्थापिता तैः। किन्तु विद्यमानैवाभिवर्धिता।

**ग्रन्थप्रणयनम्**

षट्कर्मनिरतानां श्रीविरूपाक्षशास्त्रिणां ग्रन्थरचनार्थं समयो नावशिष्ट इत्येव वक्तव्यम्। अध्ययने अध्यापने जीवितस्य महान् कालस्तैरुपयुक्तः। यजनयाजनयोरपि कर्मशूराणां तेषां महती प्रीतिः। तथापि न्यायशास्त्रे तद्रचिता काचिद् व्याख्या लभ्यते -

ब्रह्मश्रीकुणिगल् रामशास्त्रिणो महापण्डिता इति सर्वत्र विख्याताः। शृङ्गगिरिजगद्गुरुश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिनां पूर्वाश्रमे तात पादा एते न्यायशास्त्रे शतकोटिनामकं प्रबन्धमातेनिरे। शृङ्गगिरिजगद्गुरवस्तदुपरि कुल्याख्यां व्याख्यामन्वगृह्णन्। श्रीविरूपाक्ष-शास्त्रिणः कुल्यां नौकाभिधेन क्रोडपत्रग्रन्थेन योजयामासुः। एतद्व्यतिरेकेण बहून् शिष्यान् मेधाविनो ग्रन्थादि रचनाशक्तान् विधाय श्रीविरूपाक्षशास्त्रिणः कृतकृत्याः। भाषान्तरादिकमेतेषां शिष्यप्रशिष्याः कृतवन्त इति न पुनर्वक्तव्यम्। संशोधनमपि प्रवचनादावेव व्यक्तम्।

**स्वभावः**

श्रीविरूपाक्षशास्त्रिणोऽत्यन्तं मृदुस्वभावा आसन्। पाण्डित्येन राजाश्रयादिना तेषामन्तःकरणं कलुषितं नासीत्। सर्वानपि स्नेहेनादरेण बहुवचनेनैव सम्बोधयन्ति स्म। एकवचनेन कथने कस्यापि अनादरः



प्रदर्शित इव स्यादिति मन्यन्ते स्म। यः कोऽपि तेषां सकाशे बहुवचनं प्रयोक्तव्यमिति कदाचिद् उक्तवान् स्याद्वेति संशयोऽपि करालेऽस्मिन् कलिकाले सम्भाव्यते।

**प्रभावः**

श्रीविरूपाक्षशास्त्रिणां प्रत्यक्षः प्रभावस्तेषां पुत्रशिष्यादौ स्वाभाविकः। किन्तु सामाजिकानामुपरि तेषां प्रभावो महान्। तेषां प्रेरणया बहवो विद्वांसः, श्रीचक्राराधानतत्पराः, यजन-याजनपरायणा जाताः। तेषां कार्यक्षेत्रे, शृङ्गगिरौ(Sringeri) धारापुरे(Dharwad) कल्याणपुरे (Bangalore) महिषासुरपुरे(Mysore) अन्यत्र च प्रभावोऽद्यापि दृश्यते। वेदान्तकेसरिणो ब्रह्मश्रीनारायणभट्टास्तेषां जीवनेन प्रभाविता बभूवुरिति तद्वचनादेव ज्ञायते। एवमेवान्येऽ-सङ्ख्याताः ख्याताः श्रीविरूपाक्षशास्त्रिणां परोक्षप्रभावं प्राप्ताः। श्रीरङ्गनाथशर्मभिर्महामहोपाध्यायप्रशस्तिः यदा प्राप्ता, तदा तैर्विरूपाक्षशास्त्रिणः स्मृता इत्युच्यते श्रीमहाबलेश्वरभट्टैः। पूर्वं तादृशमहात्मनामियं प्रशस्तिः, सम्प्रति मादृशानामिति श्रीशर्माणो विनयं ख्यापयन्ति।

**जीवनदर्शनम्**

श्रीविरूपाक्षशास्त्रिणामाशीर्वादसरणिः भगवति वासुदेवेऽविच्छिन्ना भक्तिरस्तु इत्यासीत्। यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः इति भागवतीं सूक्तिं ते वदन्ति स्म। न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति इति गीतावाणीं स्मारयन्ति स्म। भयकृद् भयनाशनः इति सहस्रनामस्तोत्रांशस्तेषां श्रीमुखात् कदाचिद् निस्सरति स्म। सर्वमिदं श्रीमन्त ई.श.वरदाचार्या वदन्ति स्मेति तदुपरि

श्रीविरूपाक्षशास्त्रिणां प्रभावः स्पष्टः। भागवती प्रपत्तिरेव श्रीविरुपाक्षशास्त्रिणां जीवनस्य दर्शनम् इति वक्तव्यम्।

**तुर्याश्रमस्वीकारः**

कूडलिमठाधीशाः श्रीवालुकेश्वरभारतीस्वामिनो राजधान्यां वर्तमानानां श्रीविरूपाक्षशास्त्रिणां सविधे स्वमठमागन्तुमुपदिदिशुः। यदि महाराजाः सम्मन्यन्ते, तर्ह्यागमिष्यमीति श्रीविरूपाक्ष-शास्त्रिणोऽवदन्। तदा स्वामिन आस्थान सर्वाधिकारिणं श्रीनृसिंह-शास्त्रिणं महाराजसम्मुखं सम्प्रेष्य तदनुमतिं लेभिरे।

मैसूरुनगरे शिष्याणामभिमानिनाञ्च सम्मानानन्तरं श्रीविरूपाक्ष-शास्त्रिण स्ततः प्रस्थिताः(५.७. १९३२)। आङ्गिरससंवत्सरस्य आषाढशुक्लदशम्यां श्रीवालुकेश्वरभारतीस्वामिनां सकाशात् नीरघट्टे (उदगट्टि) तुर्याश्रमं स्वीकृवन्तः (१४.७.१९३२)। तस्मिन् वर्षे गुरुशिष्याभ्यामुभाभ्यां तत्रैव चातुर्मास्यव्रतं अनुष्ठितम्। ततः श्रीमठीयभारं सर्वं शिष्येषु श्रीविद्याभिनववालुकेश्वरभारती स्वामिषु निक्षिप्य दीक्षागुरवः श्रीवालुकेश्वरभारतीस्वामिनोऽनन्तपुरं प्रस्थिताः।

तदानीं कूडलिश्रीमठस्य ६५००० रूप्यकाणां ऋणमासीत्। मैसूरुमहाराजस्यौदार्येण तदृणं अपनीतम्। धारवाडश्रीनागेशशास्त्रिणः श्रीमठस्य सर्वाधिकारिणः कृताः। ततः सञ्चारार्थं प्रस्थिताः दीर्घघट्टात् कूडलिक्षेत्रमागताः (८.४.१९३३)। तत्र दिनद्वयमुषित्वा पुनः प्रस्थाय शिवमोग्गादिमार्गेण लिङ्गदहळ्ळिप्रदेशं गताः। केनचित् निमित्तेन रक्तमृण्मयगर्तं(केम्मण्णुगुण्डि) आगता मैसूरुमहाराजाः श्रीचरणानां दर्शनार्थं लिङ्गपल्ली(लिङ्गदहळ्ळि)मागताः। श्रीमन्महाराजाना-



मपेक्षानुरोधेन श्रीमठस्यार्थिकाभिवृद्धये चातुर्मास्यार्थं महीशूरपुर (Mysore)मेव वरमिति निश्चितम्।

पुनः सञ्चारमनुवर्त्य ग्रामाद् ग्रामं पत्तनात् पत्तनमतिक्रम्य श्रीरङ्गपत्तनं श्रीस्वामिनः प्राप्ताः (५.७.१९३३)। ततः मैसूरुमहाराजस्य स्वागतं लब्ध्वा राज वैभवेन मैसूरुपुरं प्रविविशुः। चातुर्मास्यव्रतानुष्ठानार्थं श्रीमन्महाराजसंस्कृतपाठ शालायामवकाशः कृतः। तदनन्तरं जगन्मोहनप्रासादपुरस्तात् मोतीखानाभवने वासार्थं व्यवस्था कृता(८.३.१९३५)। तदारभ्य शरीरत्यागपर्यन्तं (१०.४. १९३६) तत्रैव वासः। पूजादिसामग्री प्रासादात् प्रेष्यते स्म। प्रतिमासं व्ययार्थं १२० - ३०० रूप्यकाणि क्रमेण वर्धितानि प्रासादादेव प्राप्यन्ते स्म।

तद्राजवैभवं साक्षात्कर्तुं बहवो विद्यार्थिनस्तत्रासन्। तेषु वेदान्त-प्रौढच्छात्राः परमपूज्यस्वर्णवल्लीमठाधीशाः, हानगल्श्रीमहादेवशास्त्रिणः (संन्यासानन्तरं सच्चिदानन्दशङ्करभारतीस्वामिनः), सूरिरामचन्द्र-शास्त्रिणः बोम्बेवेङ्कटरमणशास्त्रिणः इत्यादया उल्लेखनीयाः। श्रीलिङ्गशास्त्रिणः (तुर्याश्रमनाम श्रीसच्चिदानन्दवालुकेश्वरभारती-स्वामिनः) श्रीविरूपाक्षशास्त्रिणां पौत्रस्थानीयाः अल्पवयसः सन्ध्योपासनमन्त्राणां कण्ठपाठं कुर्वन्ति स्मेति ज्ञातम्। स्वयं श्रीविद्याभिनववालुकेश्वरभारतीस्वामिभिरेव वेदान्तादिशास्त्रपाठवत् सन्ध्योपासन मन्त्रपाठोऽपि क्रियते स्मेति ज्ञात्वा विस्मयो भवेदेव। रात्रौ शयानानां छात्राणां शीतकाले प्रावरणमस्ति न वेति स्वयं श्रीस्वामिभिः परिशील्यते स्म । अहो, शिष्यवात्सल्यं महा-महोपाध्यायानाम्।

**महासमाधिः**

श्रीस्वामिनस्तदा तदा महाराजस्यामन्त्रणं प्राप्य प्रासादं गत्वा वेदान्तोपदेशं कुर्वन्ति स्म। अतः कृतज्ञो महाराजः श्रीस्वामिनां ब्रह्मीभावानन्तरं संस्कृतमहापाठशालायाः प्रदेश एवाधिष्ठानं मन्दिरं च निर्मातुं आज्ञापयत्। तदधिष्ठानं पुराणप्रवचनादिना श्रीविरूपाक्षशास्त्रिणां पुत्रैः श्रीयज्ञेश्वशास्त्रिभिः पूर्वमवेक्षितम्। सम्प्रति पौत्रैः श्रीभालचन्द्र-शास्त्रिभिरवेक्ष्यते। अनन्तरं प्रपौत्रैः शिवतेजः-प्रमुखैरवेक्षिष्यते।

***

**End-notes :**

१. श्रीसर्वज्ञेन्द्रसरस्वतीस्वामिनः(१९०६-१९९०) हानगल्विरूपाक्षशास्त्रिणां स्वीकृतसंन्यासाश्रमाणां संन्यासिशिष्याः येषां विषये सचित्रं बृहत्पुस्तकं श्रीभगवत्पादप्रकाशनेन प्रकाशितम्।

२. पाठशालाया इतिवृत्तम् - पुस्तकमिदं धारवाडस्थश्रीमज्जगद्गुरुशङ्कराचार्य-संस्कृतपाठशालाया हीरकमहोत्सवे प्रकाशितम्(१९५१)। श्रीमहादेव-प्रभाकरपूजारोऽस्य लेखकः। अत्र पुस्तके चित्रैः सह कन्नडभाषायां विवृता विषयाः प्रकृतपुस्तके प्रायेण संस्कृतेन संस्कृताः।

३. देवणदीक्षितवंशीया इत्यत्र मैसूरुश्रीमत्कन्यकापरमेश्वरीमुद्राशालाद्वारा लोकभाषया प्रकाशितं श्रीविरूपाक्षशास्त्रिणां जीवनचरित्रं प्रमाणम्। इदमपि प्रकृतपुस्तकस्याकरान्तरम्।

४. एतद्वंशीयाः केचन श्रीविरूपाक्षशास्त्रिणो द्विषन्ति स्मेति मैसूरुप्रकाशित-पुस्तकेऽस्ति।

५. मैसूरुपुस्तके कीरणिकृष्णाचार्या इत्यस्ति। अत्र ज्ञापकचित्रशालाप्रथमसम्पुटो द्रष्टव्यः।

६. मीमांसादर्शनस्य च प्रस्तावना एतैर्लिखिता।



७. ब्रह्मश्रीहानगल्विरूपाक्षशास्त्रिणः आङ्गिरससंवत्सरे आषाढशुक्लदशम्यां (जुलै १९३२) कूडलिमठस्थैः परमपूज्यश्रीवालुकेश्वरभारतीस्वामिभिः शिष्यतया परिगृहीताः श्रीविद्याभिनववालुकेश्वरभारतीस्वामिन इति प्रथिताः। बाल्येऽपि मातापित्रोः सकाशात् श्रीशिवदीक्षितैः स्वीकृताः। एवं शृङ्गगिरिजगद्गुरुश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनां शिष्या इमे कूडलि(शृङ्गगिरि)-सम्बन्धिनो जाताः। इत्थं द्वे गुरुपरम्परे।

८. पाठशालाया इतिवृत्ते पूर्वोक्ता घटना शृङ्गगिरिजगद्गुरुश्रीचन्द्रशेखरभारती-सम्बन्धिनी। तदनुग्रहेण सर्वमिदं संवृत्तमिति तत्र लिखितम्। तत्रैव टिप्पण्यां मूकबालकस्य ग्रामः कः, अभिधानं किम्, कस्य मठस्याधि-पतिर्जात इत्यादि न ज्ञायत इत्यपि मेलितम्।

९. दम्पत्योः सहाधिकार इति मीमांसकाः। सोमयाजिनां श्रीविरूपाक्षशास्त्रिणां विद्याव्यसनिनामपि विवाहः पूर्वमेवासीत्। वेदाध्ययनसमय एव द्वादशे वर्षे द्वितीयामद्वितीयां परिजगृहुः। सम्प्रति यागदीक्षासमये वयः ३३ वर्षाणि। गतेषु २१ वर्षेषु कन्या अजायन्त। पुत्रस्तु श्रीयज्ञनारायणकृपयानन्तरं जातो यज्ञेश्वरनाम्ना सम्बोधितः (८.२.१९०८ - १८.१०. १९९०)। किन्तु किञ्चित्काल एव (३६तमवर्षे)

१०. घटपटादेः धूमवह्न्यादेः ह्रदमहानसादेरसकृत् श्रवणमात्रम्, न मीमांसायामिव स्वर्गकामो यजेतेत्यादिवेदवाक्यानाम्।

११. अपरिग्रहाच्चात्यन्तमनपेक्षा(ब्र.सू.२.२.१७) इति दर्शनस्यैव तथात्वे व्युत्पत्तिमात्रोपयोगिनां का कथा।

१२. बहिर्देशविषये कथान्तरं विद्यते श्रीविरूपाक्षशास्त्रिणाम्। प्रातःकाले शौचं विना स्नानं कर्तुं न शक्यते। स्नानं विना पूजाहारादि कर्तुं न शक्यम्। किन्त्वाहारं विना शौचप्रवृत्तिर्न भवेत्। तदर्थं रात्रावेव भेषजपानं कृतम्। प्रातरुत्थाय शौचप्रवृत्तये प्रतीक्षा कृता। भेषजं स्वीकृतमिति तत्प्रवृत्तिर्भवेदेवेति निश्चयः। बहुविलम्बानन्तरमपि यदा प्रवृत्तिर्नानुभूता, तदा विना शौचं स्नानमेव कृत्वा पूजार्थमुपविष्टे तदा शौचप्रवृत्तिसंवेदनम्। किं कुर्मः।

१३. काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।
व्यसनेन तु मूर्खाणां निद्रया कलहेन वा।।

१४. न देवा दण्डमादाय रक्षन्ति पशुपालवत् इति सुभाषितम्। महान्तः परोक्षप्रियाः प्रायेण।

१५. शृङ्गगिरिजगद्गुरुश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिनां (पूर्वाश्रमे शिव स्वामिनां) जन्म श्रीशालिवाहनशके १७८०तमे पिङ्गळसंवत्सरे फाल्गुणमासबहुळपक्षे एकादश्यां(१८५८) महिषपुरे (Mysore) बभूव। तातपादाः पण्डिततल्लजाः श्रीकुणिगल् रामशास्त्रिणः। मातृश्रीः सौ.श्रीमती लक्ष्म्यम्बा (लक्ष्मम्म)। श्रीशालिवाहनशकवर्षे १८३५तमे परिधाविसंवत्सरे चैत्रमासस्य द्वितीयायां महास्वामिनो ब्रह्मीभूताः।

१६. शृङ्गगिरिजगद्गुरुश्रीचन्द्रशेखरभारतीमहास्वामिनः (पूर्वाश्रमे नरसिंहनामानः)। नन्दनसं. आश्विनकृष्ण ११ भानुवासरे (१६.१०.१८९२) जन्म। तातपादाः श्रीगोपालशास्त्रिणः। मातृश्रीः सौ.श्रीमती लक्ष्मम्म। जयसं. भाद्रपदमासे अमावास्यायामेते ब्रह्मीभूताः। (२६.९.१९५४)

१७. ब्रह्मश्रीविरूपाक्षशास्त्रिणः प्रतिदिनं पाठयन्ति, श्रीचरणाः शृण्वन्ति। पाठानन्तरं अनुष्ठानव्यापृता मननं न कुर्वन्तीत्यालोच्य श्रीशास्त्रिणो चिन्तनं कर्तव्यमिति सूचयन्ति। श्रीचरणा अपि ॐ इति वदन्ति, किन्तु नावर्तनं कुर्वन्ति। तदिदं विज्ञाय कदाचित् श्रीशास्त्रिणः श्रीचरणान् पूर्वं पाठितेषु विषयेषु किञ्चित् प्रतिपादयितुं निवेदयमासुः। मन्दस्मितवदनाः श्रीचरणाः, को वा विषयो वक्तव्यः इति पप्रच्छुः। श्रीशास्त्रिणो गहनमेकं विषयं विवरीतुं व्यजिज्ञपन्। तत्त्वं करतलामलकवत् पश्यन्तः श्रीचरणाः श्रीशास्त्रिणां तृप्तये बहु सम्यक् प्रत्यपादयन्। अनेनानुतप्ताः श्रीशास्त्रिणः क्षमायाचनापूर्वकं श्रीचरणान् साष्टाङ्गं प्रणेमुः। तदा स्वस्थानं जिगमिषवः श्रीचरणाः श्रीशारदापरमेश्वरीव साक्षात्कृता इति स्वयमेव श्रीशास्त्रिभिस्तदा तदा स्मर्यते स्म।

१८. विद्यया श्रीविद्यया च श्रीविरूपाक्षशास्त्रिणां द्विविधा गुरुपरम्परा। विद्यागुरुपरम्परा पूर्णतया न ज्ञायते। किन्तु वेदान्तगुरुपरम्परा सम्यग् ज्ञायते। श्रीविरूपाक्षशास्त्रिभिः शृङ्गगिरौ जगद्गुरुश्रीसच्चिदानन्दशिवाभिनव-नृसिंहभारतीमहास्वामिनां समक्षं वेदान्तशास्त्रश्रवणं विहितं इति शृङ्गगिरिप्रातःस्मरणीयजगद्गुरुपरम्परैव श्रीविरूपाक्षशास्त्रिणां वेदान्तगुरुपरम्परा। अतः शृङ्गगिरिगुरुपरम्पराऽनुबन्धे दर्शिता। श्रीविद्याया गुरुपरम्परा गूढाऽपि कामकोटिमण्डल्या प्रकाशिता। साप्यनुबन्धेऽत्र योजिता।

# अनुबन्धः १

**शृङ्गगिरिश्रीशारदापीठजगद्गुरवः**

श्रीसदाशिवः
श्रीनारायणः
श्रीपद्मभूः
श्रीवसिष्ठः
श्रीशक्तिः
श्रीपराशरः
श्रीव्यासः
श्रीशुकः
श्रीगौडपादः
श्रीगोविन्दयोगीन्द्रः
श्रीशङ्करभगवत्पादः (७८८ - ८२०)
श्रीसुरेश्वरः (८२०-८३४)
श्रीनित्यबोधघनः (८३४-८४८)
श्रीज्ञानघनः (८४८-९१०)
श्रीज्ञानोत्तमः (९१०-९५४)
श्रीज्ञानगिरिः (९५४-१०३८)
श्रीसिंहगिरिः (१०३८-१०९८)
श्रीईश्वरतीर्थः (१०९८-११४६)
श्रीनृसिंहतीर्थः (११४६-१२२९)
श्रीविद्याशङ्करतीर्थः (१२२९-१३३३)
श्रीभारतीकृष्णतीर्थः (१३३३-१३८०)
श्रीविद्यारण्यः (१३८०-१३८६)
श्रीचन्द्रशेखरभारती (१३८६-१३८९)



श्रीनृसिंहभारती १ (१३८९-१४०८)
श्रीपुरुषोत्तमभारती १ (१४०८-१४४८)
श्रीशङ्करभारती (१४४८-१४५५)
श्रीचन्द्रशेखरभारती २ (१४५५-१४६४)
श्रीनृसिंहभारती २ (१४६४-१४७९)
श्रीपुरुषोत्तमभारती २ (१४७९-१५१७)
श्रीरामचन्द्रभारती (१५१७-१५६०)
श्रीनृसिंहभारती ३ (१५६०-१५७३)
श्रीनृसिंहभारती ४ (१५७३-१५७६)
श्रीनृसिंहभारती ५ (१५७६-१६००)
श्रीअभिनवनृसिंहभारती (१६००-१६२३)
श्रीसच्चिदानन्दभारती १ (१६२३-१६६३)
श्रीनृसिंहभारती ६ (१६६३-१७०६)
श्रीसच्चिदानन्दभारती २ (१७०६-१७४१)
श्रीअभिनवसच्चिदानन्दभारती (१७४१-१७६७)
श्रीनृसिंहभारती ७ (१७६७-१७७०)
श्रीसच्चिदानन्दभारती ३ (१७७०-१८१४)
श्रीअभिनवसच्चिदानन्दभारती (१८१४-१८१७)
श्रीनृसिंहभारती ८ (१८१७-१८७९)
श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारती (१८७९-१९१२)
श्रीचन्द्रशेखरभारती ३ (१९१२-१९५४)
श्रीअभिनवविद्यातीर्थः (१९५४-१९८९)
श्रीभारतीतीर्थः २ (१९८९-झीशीशपीं)

# अनुबन्धः २

## (श्रीविद्या)

गुरुपरम्परा
महाषोडशी - महापादुका - महाप्रसादः
श्रीकामेश्वरः - श्रीकामेश्वरी
(महाप्रकाशानन्दनाथः - महाविमर्शिन्यम्बा)
मेधादक्षिणामूर्तिः
कपिलः
अत्रिः
वसिष्ठः
सनकः
सनन्दनः
भृगुः
सनत्सुजातः
वामदेवः
नारदः
गौतमः
शौनकः
शक्तिः
मार्कण्डेयः
कौशिकः
पराशरः
शुकः
आङ्गिरसः
कण्वः



जाबालिः
भारद्वाजः
वेदव्यासः
श्रीगौडपादाचार्यः
श्रीगोविन्दभगवत्पादाचार्यः
श्रीविद्याशङ्करभगवत्पादाचार्यः
श्रीवार्तिकाचार्यः
श्रीविद्याशङ्करतीर्थः
श्रीविद्यारण्यः
श्रीवृद्धनृसिंहभारतीस्वामिनः
श्रीश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीमहास्वामिनः - श्रीविद्याशङ्करभारतीमहास्वामिनः
श्रीश्रीवालुकेश्वरभारतीमहास्वामिनः
श्रीश्रीविद्याभिनववालुकेश्वरभारतीमहास्वामिनः
(महामहोपाध्यायश्रीहानगल्विरूपाक्षशास्त्रिणः)
आस्थानविद्वांसः ब्रह्मश्रीशङ्करशास्त्रिणः के.पि.

आधारः -

गद्यवल्लरी
श्रीविद्यार्णवतन्त्रम्
सिंहभट्लशास्त्रिणः(ज्ञानानन्दनाथस्य) सपर्यापद्धतिः
तिरुनेल्वेलिसाम्बशिव अय्यर्(यज्ञानन्दनाथ)कृता अद्वैतचन्द्रिका
हानगल्शङ्करशास्त्रि(जगन्नाथशास्त्रि)कृता सपर्यापद्धतिः
श्रीवालुकेश्वरभारतीशिष्यरामानन्दभारतीकृता सपर्यापद्धतिः
सागरसुब्रह्मण्यशर्मकृता सपर्यापद्धतिः (श्रीशर्माणः श्रीसच्चिदानन्द-शिवाभिनवनृसिंहभारतीमहास्वामिशिष्याः)

रामनाथपुरवासिरामचन्द्रन्अय्यर्कृता आम्नायक्रमटिप्पणी
(श्रीरामचन्द्रन्अय्यर् श्रीश्रीचन्द्रशेखरभारतीदीक्षिताः)

## श्रीविद्याक्रमदीक्षा

श्रीचर्यानन्दनाथः - श्रीपराभट्टारिकाम्बा (महामिथुनम्)
समस्तगुरुमण्डलविलीनमहादक्षिणामूर्तिः
ओड्डीशानन्दनाथः - महाकामेश्वरी
(क्रोधभट्टारकः, प्रकाशानन्दनाथः विमर्शानन्दनाथः, आनन्दानन्दनाथः)
षष्ठीशानन्दनाथः- महावज्रेश्वरी
(ब्रह्मण्यज्ञानानन्दनाथः, सत्यानन्दनाथः, पूर्णानन्दनाथः)
षष्ठीशानन्दनाथः - महावज्रेश्वरी (ब्रह्मण्यज्ञानानन्दनाथः,
सत्यानन्दनाथः, पूर्णानन्दनाथः)
मित्रेशानन्दनाथः - महाभगमालिनी
(स्वच्छन्दभैरवानन्दनाथः, स्वभावानन्दनाथः, प्रतिभानन्दनाथः,
सुभगानन्दनाथः)

सनकानन्दनाथः -
सनन्दनानन्दनाथः -
सनातनानन्दनाथः -सनत्कुमारानन्दनाथः
वसिष्ठानन्दनाथः
शक्त्यानन्दनाथः
पराशरानन्दनाथः
व्यासानन्दनाथः
शुकानन्दनाथः
नृसिंहानन्दनाथः



महेशानन्दनाथः
भास्करानन्दनाथः
महेन्द्रानन्दनाथः
माधवानन्दनाथः
जिष्णुदेवानन्दनाथः
गौडपादानन्दनाथः
गोविन्दानन्दनाथः
श्री आदिशङ्करभगवत्पादः
श्रीपद्मपादाचार्यः
भगवती बिम्बाम्बिका (महाविद्या बगलामुखी)
वाग्भवानन्दनाथः
परात्मानन्दनाथः
नीलकण्ठानन्दनाथः
शाम्भवानन्दनाथः
विश्वात्मकानन्दनाथः
प्रियानन्दनाथः
क्रोधीशानन्दनाथः
वीरानन्दनाथः
चिन्मुद्रानन्दनाथः
भगवती बीजाम्बिका - संविच्छक्त्यम्बा (महाविद्या नीलसरस्वती)
भट्टानन्दनाथः
मदनानन्दनाथः
शाकवृद्ध्यानन्दनाथः
भगवती शीलाभट्टारिका (शाकम्भरी दुर्गा)
(पश्चिमस्रोतोद्वारा - गुर्जरदेशः - कादित्रिषोडशीक्रमः)

भगवती महोच्छुष्माम्बा (उत्तरकाशी)

कामेश्वरानन्दनाथः (नेपालदेशिकः, बहवो नेपालराजाः)

कुलेश्वरानन्दनाथः (बदरिकाश्रमः)

श्रीधेनुकानन्दनाथः (षोडशीत्रयम् - सुन्दरीकुलम् - पश्चिमस्रोतः) - दीपकानन्दनाथः (कामकला काली - कालीकुलम्, मन्थनभैरवीय-सम्प्रदायः) - स्वच्छन्दभैरवानन्दनाथः (छिन्नमस्ता -महासाम्राज्यमेधा)

श्रीश्रीचिन्मुद्रानन्दनाथः

**प्रमाणम् – हस्तप्रतयः**

(१) सपर्यापद्धतिः - श्रीचिन्मुद्रानन्दनाथः
- भगवतीसुभद्राम्बा
- महामहोपाध्यायगोपीनाथकविराजः
- श्रीसीतारामकविराजः

(२) बृहद्वडबानलतन्त्रम्

(३) उड्डामरेश्वरतन्त्रम्

(४) यतिदण्डैश्वर्यविधिः - श्रीशङ्करभगवत्पादः

(५) ऊर्ध्वाम्नायाख्यतन्त्रम्

(६) क्रमकल्पलता

(७) बिम्बाम्बिकाबोधः

(८) कामकलाविलासभाष्यम् - श्रीचिन्मुद्रानन्दनाथः

(९) पद्मपादस्तवः - शीलाभट्टारिका

(१०) परमहंसोपनिषद्भाष्यम् - गौडवाचस्पतिमिश्रः

(११) आचारकेदारः - योगानन्दनाथः



(१२) क्रमषोढान्यासः - श्रीकरपात्रिस्वामी

(१३) सङ्कीर्णकृतयः - राणा शंशेर जंग बहदूरः इत्यादि

**श्रीकुलगुरुमण्डलम्**

**परौघयुगगुरुमण्डलम्**

दिव्यौघः

(१) ओड्डीशानन्दनाथः

(२) प्रकाशानन्दनाथः

(३) विमर्शानन्दनाथः

(४) आनन्दानन्दनाथः

सिद्धौघः

(१) षष्ठीशानन्दनाथः

(२) ज्ञानानन्दनाथः

(३) सत्यानन्दनाथः

(४) पूर्णानन्दनाथः

मानवौघः

(१) मित्रेशानन्दनाथः

(२) स्वभावानन्दनाथः

(३) प्रतिभानन्दनाथः

(४) सुभगानन्दनाथः

## कादिपञ्चदशीगुरुमण्डलम्

दिव्यौघः

(१) परप्रकाशानन्दनाथः
(२) परशिवानन्दनाथः
(३) पराशक्त्यम्बा
(४) कौलेश्वरानन्दनाथः
(५) शुक्लदेव्यम्बा
(६) कुलेश्वरानन्दनाथः
(७) कामेश्वर्यम्बा

सिद्धौघः

(१) भोगानन्दनाथः
(२) क्लिन्नानन्दनाथः
(३) समयानन्दनाथः
(४) सहजानन्दनाथः

मानवौघः

(१) गगनानन्दनाथः
(२) विश्वानन्दनाथः
(३) विमलानन्दनाथः
(४) मदनानन्दनाथः
(५) भुवनानन्दनाथः
(६) लीलानन्दनाथः
(७) स्वात्मानन्दनाथः
(८) प्रियानन्दनाथः

## हादिपञ्चदशी-सप्तदशीमण्डलम्

दिव्यौघः

(१) परमशिवानन्दनाथः
(२) कामेश्वर्यम्बा
(३) दिव्यौघानन्दनाथः
(४) महौघानन्दनाथः
(५) सर्वानन्दनाथः
(६) प्रज्ञादेव्यम्बा
(७) प्रकाशानन्दनाथः

सिद्धौघः

(१) दिव्यानन्दनाथः
(२) चिदानन्दनाथः
(३) कैवल्यानन्दनाथः
(४) अणुदेव्यम्बा
(५) महोदयानन्दनाथः
(६) सिद्धानन्दनाथः

मानवौघः

(१) चिदानन्दनाथः
(२) विश्वानन्दनाथः
(३) रामानन्दनाथः
(४) कमलानन्दनाथः
(५) परानन्दनाथः
(६) मनोहरानन्दनाथः



(७) स्वात्मानन्दनाथः
(८) प्रतिभानन्दनाथः

## मनुचन्द्रादीनां गुरुमण्डलम्

दिव्यौघः

१.परप्रकाशानन्दनाथः
२.परविमर्शानन्दनाथः
३.कामेश्वर्यम्बा
४.मोक्षानन्दनाथः
५.अमृतानन्दनाथः
६.स्वच्छानन्दनाथः
७.तत्पुरुषानन्दनाथः
८.अघोरानन्दनाथः

सिद्धौघः

१.प्रकाशानन्दनाथः
२.सदानन्दनाथः
३.सिद्धौघानन्दनाथः
४.उत्तमानन्दनाथः

मानवौघः

१.उत्तरानन्दनाथः
२.परमानन्दनाथः(उद्धवानन्दनाथः)
३.सर्वज्ञानन्दनाथः
४.सर्वानन्दनाथः
५.सिद्धानन्दनाथः
६.गोविन्दानन्दनाथः
७.शङ्करानन्दनाथः

## कादिशुद्धषोडशिगुरुमण्डलम्

दिव्यौघः

१.व्योमातीताम्बा
२.व्योमेश्यम्बा
३.व्योमचारिण्यम्बा
४.व्योमस्थाम्बा

सिद्धौघः

१.उन्मनाक्षानन्दनाथः
२.समानाक्षानन्दनाथः
३.व्यापकाक्षानन्दनाथः
४.शक्त्यक्षानन्दनाथः
५.ध्वन्यक्षानन्दनाथः
६.ध्वनिमात्राकाशानन्दनाथः
७.अनाहताकाशानन्दनाथः
८.बिन्द्वाकाशानन्दनाथः
९.इन्द्वाकाशानन्दनाथः

मानवौघः

१.परमात्मानन्दनाथः
२.शाम्भवानन्दनाथः
३.चिन्मुद्रानन्दनाथः
४.वाग्भवानन्दनाथः

५.लीलानन्दनाथः
६.सम्भ्रमानन्दनाथः
७.चिदानन्दनाथः
८.प्रसन्नानन्दनाथः
९.विश्वानन्दनाथः

**कादिमहाषोडशिगुरुमण्डलम्**

दिव्यौघः
१.श्रीशिवानन्दनाथः - पराशक्त्यम्बा
२.श्रीसदाशिवानन्दनाथः - चिच्छक्त्यम्बा
३.श्रीश्वरानन्दनाथः - आनन्दशक्त्यम्बा
४.श्रीरुद्रदेवानन्दनाथः - इच्छाशक्त्यम्बा
५.श्रीविष्णुदेवानन्दनाथः - ज्ञानशक्त्यम्बा
६.श्रीब्रह्मानन्दनाथः - क्रियाशक्त्यम्बा

सिद्धौघः
१.श्रीसनकानन्दनाथः
२.सनन्दनानन्दनाथः
३.श्रीसनातनानन्दनाथः
४.श्रीसनत्कुमारानन्दनाथः
५.श्रीशौनकानन्दनाथः
६.श्रीसनत्सुजातानन्दनाथः
७.श्रीदत्तात्रेयानन्दनाथः
८.श्रीरैवतानन्दनाथः
९.श्रीवामदेवानन्दनाथः



१०.श्रीव्यासानन्दनाथः
११.श्रीशुकानन्दनाथः

मानवौघः
१.श्रीनृसिंहानन्दनाथः
२.श्रीमहेशानन्दनाथः
३.श्रीभास्करानन्दनाथः
४.श्रीमहेन्द्रानन्दनाथः
५.श्रीमाधवानन्दनाथः
६.श्रीविष्णुदेवानन्दनाथः

**परागुरुमण्डलम्**

दिव्यौघः
१.अघोरान्दनाथः
२.श्रीकण्ठानन्दनाथः
३.क्रोधीशानन्दनाथः
४.त्र्यम्बकानन्दनाथः
५.भट्टानन्दनाथः
६.पराभट्टारिकानन्दनाथः

सिद्धौघः
१.प्रतिभानन्दनाथः
२.वीरानन्दनाथः
३.संविदानन्दनाथः
४.सदाशिवानन्दनाथः

मानवौघः
१.श्रीगुरुः
२.श्रीपरमगुरुः
३.श्रीपरमेष्ठिगुरुः
४.श्रीपरापरगुरुः
५.श्रीकारणगुरुः (अघोरमन्त्रवाच्यः)

**पराषोडशीगुरुमण्डलम्**
**(वाग्देवतातादात्म्यम्)**

दिव्यौघः
१.पराभट्टारिकाम्बा
२.अघोरानन्दनाथः
३.श्रीकण्ठानन्दनाथः
४.शक्तिधरानन्दनाथः
५.क्रोधीशानन्दनाथः
६.त्र्यम्बकानन्दनाथः
७.भट्टारकानन्दनाथः

सिद्धौघः
१.प्रतिभानन्दनाथः
२.वीरानन्दनाथः
३.संविदानन्दनाथः
४.संविदम्बा

मानवौघः
१.सदाशिवानन्दनाथः

| | |
|---|---|
| २.महेश्वरानन्दनाथः | २.विश्वानन्दनाथः |
| ३.संविदम्बा | ३.विमलानन्दनाथः |
| ४.श्रीविद्यानन्दनाथः | ४.कमलानन्दनाथः |
| ५.संविदम्बा | ५.मनोहरानन्दनाथः |
| ६.श्रीमदनुत्तरानन्दनाथः | ६.परमानन्दनाथः |
| ७.योगानन्दनाथः | ७.स्वात्मानन्दनाथः |
| ८.संविदम्बा | ८.प्रतिभानन्दनाथः |
| **ऊर्ध्वौघगुरुमण्डलम्** | **लोपामुद्रागुरुमण्डलम्** |
| दिव्यौघः | दिव्यौघः |
| १.परमशिवानन्दनाथः | १.परशिवानन्दनाथः |
| २.कामेश्वर्यम्बा | २.पराशक्त्यम्बा |
| ३.दिव्यौघानन्दनाथः | ३.कामेश्वर्यम्बा |
| ४.महौघानन्दनाथः | ४.वज्रेश्वर्यम्बा |
| ५.सर्वौघानन्दनाथः | ५.भगमालिन्यम्बा |
| ६.प्रज्ञादेव्यम्बा | ६.लोपामुद्राम्बा |
| ७.प्रकाशानन्दनाथः | ७.अगस्त्यानन्दनाथः |
| सिद्धौघः | सिद्धौघः |
| १.परिपूर्णानन्दनाथः | १.कालतापनानन्दनाथः |
| २.परमात्मानन्दनाथः | २.धर्माचार्यानन्दनाथः |
| ३.कैवल्यानन्दनाथः | ३.मुक्तकेशीश्वरानन्दनाथः |
| ४.महोदयानन्दनाथः | ४.दीपकलानन्दनाथः |
| मानवौघः | मानवौघः |
| १.चिदानन्दनाथः | १.विष्णुदेवानन्दनाथः |



२.मातृगुप्तानन्दनाथः

३.तेजोदेवानन्दनाथः

४. ओजोदेवानन्दनाथः

५.मनोजयानन्दनाथः

६.परमानन्दनाथः (परानन्दनाथः)

७.स्वात्मानन्दनाथः (कामानन्दनाथः)

८.ज्ञानानन्दनाथः (अनज्ञानन्दनाथः)

गुह्यषोडश्या (मातृकातादात्म्यस्य) गुरुमण्डलक्रमं, निर्वाणसुन्दरी-क्रमस्य एकायतनमण्डलं च स्वगुरुणा जानीयात्।

## अनुबन्धः ३

### कूडलिशृङ्गगिरिगुरुपरम्परा

१. श्रीशङ्करभगवत्पादाः (१९ - ५१)

२. श्रीसुरेश्वराचार्याः (४७ - ८०)

३. श्रीपृथ्वीधरभारतीस्वामिनः (८० - ११५)

४. श्रीविश्वरूपभारतीस्वामिनः (११५ - १९०)

५. श्रीप्रथमचिद्रूपभारतीस्वामिनः (१९० - २४२)

६. श्रीगङ्गाधरभारतीस्वामिनः (२४२ - ३१२)

७. श्रीप्रथमचिद्घनभारतीस्वामिनः

८. श्रीप्रथमबोधघनभारतीस्वामिनः

९. श्रीज्ञानोत्तमभारतीस्वामिनः
१०.श्रीशिवानन्दभारतीस्वामिनः
११.श्रीज्ञानोत्तमभारतीस्वामिनः(२)
१२.श्रीनृसिंहभारतीस्वामिनः
१३.श्रीईश्वरभारतीस्वामिनः
१४.श्रीनृसिंहभारतीस्वामिनः
१५.श्रीविद्याशङ्करभारतीस्वामिनः
१६.श्रीकृष्णभारतीस्वामिनः
१७.श्रीशङ्करभारतीस्वामिनः
१८.श्रीचन्द्रशेखरभारतीस्वामिनः
१९.श्रीशिवानन्दभारतीस्वामिनः
२०.श्रीब्रह्मानन्दभारतीस्वामिनः
२१.श्रीचिद्रूपभारतीस्वामिनः
२२.श्रीपुरुषोत्तमभारतीस्वामिनः
२३.श्रीमधुसूदनभारतीस्वामिनः
२४.श्रीजगन्नाथभारतीस्वामिनः
२५.श्रीविश्वानन्दभारतीस्वामिनः
२६.श्रीविमलानन्दभारतीस्वामिनः
२७.श्रीविद्यारण्यभारतीस्वामिनः
२८.श्रीविश्वरूपभारतीस्वामिनः
२९.श्रीबोधघनभारतीस्वामिनः



३०.श्रीज्ञानोत्तमभारतीस्वामिनः
३१.श्रीईश्वरभारतीस्वामिनः
३२.श्रीभारतीतीर्थस्वामिनः
३३.श्रीविद्यातीर्थभारतीस्वामिनः
३४.श्रीविजयभारतीस्वामिनः
३५.श्रीनृसिंहभारतीस्वामिनः
३६.श्रीविद्यातीर्थभारतीस्वामिनः
३७.श्रीभारतीकृष्णतीर्थस्वामिनः
३८.श्रीविद्यारण्यस्वामिनः
३९.श्रीचन्द्रशेखरभारतीस्वामिनः
४०.श्रीनरसिंहभारतीस्वामिनः
४१.श्रीशङ्करभारतीस्वामिनः
४२.श्रीपुरुषोत्तमभारतीस्वामिनः
४३.श्रीचन्द्रशेखरभारतीस्वामिनः
४४.श्रीनरसिंहभारतीस्वामिनः
४५.श्रीपुरुषोत्तमभारतीस्वामिनः
४६.श्रीरामचन्द्रभारतीस्वामिनः

## कूडलिगुरुपरम्परा

१.(प्रथम)श्रीनरसिंहभारतीस्वामिनः(१४६८ - १५०८)

श्रीशालिवाहनशके १४६८तमे पराभवसंवत्सरे तृतीयश्रीनरसिंह-

भारतीस्वामिनः शृङ्गगिरिजगद्गुरु पीठमारुरुहुः। ततो दशवर्षानन्तरं-(१४७९तमे नळसंवत्सरे) स्वशिष्यान् श्रीविद्यारण्यभारतीस्वामिनः पीठाधिकारिणो विधाय तीर्थयात्रां प्रस्थिताः। किञ्चित्कालात्परं श्रीविद्यारण्यभारतीस्वामिनः विजयनगर साम्राज्यविप्लवकारणेन शृङ्गगिरिं परित्यज्य, तुङ्गभद्रासङ्गमप्रदेशस्थे प्राचीने कूडलिश्रीमठे स्थिताः। तदा तत्रत्या महाजनता श्रीरामचन्द्रभारतीस्वामिनः पीठाधिपतीन् चकार्। यात्रातो निवृत्ताः श्रीनरसिंहभारतीस्वामिनः स्वशिष्यस्थितं कूडलिश्रीमठमेव प्राप्ताः (१४८८)। समीपस्था महाजनता जगद्गुरुचराणां उभयेषां शृङ्गगिरिवदेव सर्वां व्यवस्थां प्रतिज्ञातवती। गुरवः शिष्याश्च जनैरावर्जितास्तत्रैव धातुसंवत्सरस्य कार्तिकशुक्लप्रतिपदि दीपावलिमहोत्सवे शृङ्गगिरेः जगद्गुरुपीठात् पार्थक्येन जगद्गुरुपीठं स्थापयामासुः (१४९८)। अतस्तृतीय-श्रीनृसिंहभारतीस्वामिनः प्रकृते प्रथम इति प्रथिताः। मातृवदेव शिष्यवात्सल्यमेषामिति अम्बास्वामिनः इति स्मृताः। भद्रानदीतीरे श्रीस्वामिचरणैर्निर्मापितः पश्चिमाभिमुखः श्रीमातृभूतेश्वरप्रासादोऽद्यापि विराजते।

२.श्रीविद्यारण्यभारतीस्वामिनः(१५०८ व्ययसं. - १५३९ पिङ्गळसं.)

३.(द्वितीय)श्रीनरसिंहभारतीस्वामिनः(१५३९ - १५६३)

४.(प्रथम)श्रीशङ्करभारतीस्वामिनः(१५६३ - १५८५)

५.श्रीअभिनवविद्यारण्यभारतीस्वामिनः(१५८५ - १५८६)

६.(तृतीय)श्रीनरसिंहभारतीस्वामिनः(१५८६ - १६१०)

७.(द्वितीय)श्रीशङ्करभारतीस्वामिनः(१६१० - १६३६)



८.(चतुर्थ)श्रीनरसिंहभारतीस्वामिनः(१६३६ - १६४८)

९.(तृतीय)श्रीशङ्करभारतीस्वामिनः(१६४८ - १६८८)

१०.(पञ्चम)श्रीनरसिंहभारतीस्वामिनः(१६८८ - १६९४)

११.(तुरीय)वृद्धश्रीशङ्करभारतीस्वामिनः(१६९४ - १७३०)

१२.(पञ्चम)श्रीशङ्करभारतीस्वामिनः(१७३० - १७४२)

१३.(षष्ठ)श्रीनरसिंहभारतीस्वामिनः(१७४२ - १७७६)

१४.(सप्तम)श्रीनरसिंहभारतीस्वामिनः(१७७६ - १७८२)

१५.(षष्ठ)श्रीशङ्करभारतीस्वामिनः(१७८२ - १७९७)

१६.(अष्टम)श्रीनरसिंहभारतीस्वामिनः(१७९५ - १८११)

१७.(प्रथम)श्रीविद्याशङ्करभारतीस्वामिनः(१७९७ - १८०१)

१८.(सप्तम)श्रीशङ्करभारतीस्वामिनः(१८०१ - १८४६)

१९.(द्वितीय)श्रीविद्याशङ्करभारतीस्वामिनः(१८४६)

२०.श्रीवालुकेश्वरभारतीस्वामिनः(१८४६ - १८५४)

२१.श्रीविद्याभिनववालुकेश्वरभारतीस्वामिनः(१८५४ - १८५८)

२२.श्रीसच्चिदानन्दशङ्करभारतीस्वामिनः(१८५८ - १८९२)

२३.श्रीविद्याभिनवनृसिंहभारतीस्वामिनः(१८९३ - १९१६)

२४.श्रीसच्चिदानन्दवालुकेश्वरभारतीस्वामिनः(१८९८ - -)

हानगल्लु विरूपाक्षशास्त्री



कर्णाटकराज्यस्य सुदीर्घे वाङ्मयेतिहासे अतिविशिष्टेन योगदानेन नक्षत्रायमाणाः अनेके महान्तः विद्यन्ते। इदं संस्कृतसाहित्येतिवृत्तं स्वातन्त्र्यपूर्वकालीनयुगस्य संस्कृतसाहित्येतिहासं समीचीनतया चित्रयति। किन्तु स्वातन्त्र्यसङ्ग्रामस्य कालघट्टे प्रवृत्तस्य संस्कृतसाहित्यसर्जनस्य इतिवृत्तरचना सम्यक् न जाता। कालक्रमेण इदम् अन्धकारयुगमिव सम्पद्येत कदाचित् । अस्मात् कारणात् १८५० तः १९५० पर्यन्तम् एकस्य शताब्दस्य कालखण्डे कर्णाटकस्य विविधेषु प्रदेशेषु निवसतां संस्कृतवाङ्मयस्य महत्तां वर्धयितुं कारणीभूतानां महतां योगदानविषये, तेषां जीवनगाथाविषये च शतं पुस्तकानि प्रकाशनीयानि इति अस्माकम् आशयः। अनया योजनया संस्कृतवाङ्मयस्य नवेतिहासः निर्मितः भविष्यति। एतेन, आधुनिकयुगेन सह गतशताब्दस्य सांस्कृतिकबन्धोऽपि दृढो भविष्यति इति मे विश्वासः।

अस्यां ग्रन्थमालायां डा. हित्लळ्ळि सूर्यनारायणनागेन्द्र भट्टमहोदयेन विदुषां हानगल्लु विरूपाक्षशास्त्रिमहोदयानां संस्कृतयोगदानमधिकृत्य विरचितं पुस्तकमिदं प्राकाश्यं नीयते। विद्वद्वरेण्यः कविः डा. हित्लळ्ळि सूर्यनारायणनागेन्द्रभट्टमहोदयः निरन्तरं संस्कृतशास्त्रसेवायां रतः नैकाधिकप्रबन्धकर्ता शोधकर्मणि रतः। अस्माकं प्रार्थनानुरोधेन ग्रन्थपुष्पिकामिमां अल्पे काले विरचय्य प्रदत्तवानिति तस्मै महाभागाय कार्तज्ञ्यं निवेदयामः ।

प्रो. मल्लेपुरं जि. वेङ्कटेशः, डि लिट्
कुलपतिः

Rs. 50/-




कर्नाटकसंस्कृतविश्वविद्यालयः
पम्पमहाकविमार्गः,चामराजपेटे,बेङ्गलूरु – ५६००१८